54. A.5. The work ends abruptly with verse 32 of the last canto and the last page in the transcript bears number 105. Indicated in the footnotes under (*gha*) घ and contains only cantos 7 to 12.

6. This second paper transcript was obtained from the Oriental manuscripts Library, Mysore as under the existing rules that Library could not lend single copies of works outside the state. The number of the original manuscript is 737. The transcript at the Adyar Library is put under Shelf No. 54, A. 6. Size 8 1/2 by 6 1/2 inches. Paper. Lines 12 per page. Total number of pages 116. The manuscript is incomplete and ends abruptly with the first half of verse 29 of canto 12. The indication letter for this manuscript is (*ṅa*) ङ.

The third transcript obtained from the Tanjore Saraswati Mahal Library is deposited under Shelf No. 54. A. 24 in the Adyar Library. The transcript has been so prepared that both Nos. 10209 and 10210 of Burnell's Catalogue have been utilized to make the transcript complete. Pages 98. Lines per page, 14. Pages 1 to 27 of the transcript were copied from Burnell's No. 10209. Pages 28 to 98 were transcribed from No. 10210. Even this did not save the gap or missing portion in pages 93-94, which had to be supplied from other manuscripts. All the four manuscripts in Tanjore are in palm-leaf material, and are briefly described below :

7. Burnell's Catalogue No. 10209. Palm-leaf. Size 17 1/2 × 1 1/2 inches. Leaves 26 (189-214, 212th missing). Lines 9 to 11 to a page. Grantha script. Incomplete. Indicated in this edition by the letter (*Ca*) च.

No. 4216 of Descriptive Catalogue of the Tanjore Library by Professor P. P. Subrahmanya Sastri.

8. Burnell's Catalogue No. 10210. Palm-leaf. Size 17 1/4 × 1 1/2 inches. Leaves 34 (83 to 119, 91, 115, 118 are

missing). Lines 8 to a page. Script Grantha . . . Incomplete."

P. P. S. Sastri Catalogue No. 4217. Referred to in this edition by the letter (*Cha*) छ.

9. " Burnell's Catalogue No. 10211 . . . Palm-leaf. Size 18 1/8 × 1 1/2 inches. Leaves 30 (1-33, 22, 23 and 30th are missing). Lines 6 to a page. Script—Telugu . . . Incomplete."

P. P. S. Sastri Catalogue No. 4218. Indicated by the letter (*Ja*) ज.

10. " Burnell's Catalogue No. 10212. . . . Palm-leaf. Size 15 1/2 × 1 inch. Leaves 45 (61-107, 102, 103 are missing). Lines 6 to a page. Script Grantha. . . . The manuscript is very old.

P. P. S. Sastri Catalogue No. 4219. Referred to in this edition as (*Jha*) झ.

## APPENDIX III

# ADDITIONAL INDEX

Hayapati, 37
Koṅka, 32
Maluka, 35, 40
Narasavibhu, 40
Pārasīka Sainyam, 34
Raichur, 37
Tawlava chiefs, 33
Vāhendra or Hayapati, 35, 36, 41
Yavanapati, 40

श्रीः

श्रीमते हयग्रीवाय नमः

# अच्युतरायाभ्युदयम्

## सप्तमः सर्गः

उर्वीयोषिच्चेलमुत्तंसिपुष्पोद्यानं शम्भोरम्बुवाहोदपानम् ।
पाकारातेः पादपावालमेकं गोष्ठीनं यो घुष्यते दिव्यगव्याः ॥ १ ॥

अम्भोवाहानर्भकानङ्कभाजो हस्तेनोर्म्या शङ्खमावर्जयन्ती ।
प्रायः क्षीरं पाययत्यौर्वतप्तं गर्जाव्याजात्क्रन्दतो यस्य वेला ॥ २ ॥

आशाभागानीषदाक्रम्य भूयो व्यावृत्तानां व्याजतो वीचिकानाम् ।
विश्वत्रय्या विष्वगाक्रान्तिहेतोर्विद्यां व्यक्तीकर्तुमभ्यस्यतीव ॥ ३ ॥

यस्मिञ्छौरेरेयुषो योगनिद्रां नाभीनालीकाग्रधूलीषु केलिम् ।
मन्दंमन्दं निक्वणत्किङ्किणीकाः कुर्वन्त्यम्भोमानवानां कुमाराः ॥ ४

पाठीनाक्ष्यः प्रायशः पाशपाणेर्यस्याऽऽवर्ते यत्नवर्जभ्रमीके ।
व्यावृण्वानाश्चक्रडोलाविहारं संक्रीडन्ते साकमालीजनेन ॥ ५ ॥

मैनाकाद्या यत्र मीनावलीनां वालाघातान्वज्रपातान्विशङ्कच ।
आक्रन्दन्तः स्वैरमन्तस्त्रपन्ते पश्चाद्दृष्ट्वा यादसां चेष्टितानि ॥ ६ ।

अम्भःक्रीडारम्भिणो दिङ्मदेभा नासीदन्तो यत्र नक्रा ग्रहीतुम् ।
व्यावर्तन्ते वीक्ष्य पाणौ रथाङ्गं शय्याभाजश्शार्ङ्गिणश्शङ्कमानाः ॥ ७ ॥
आस्फाल्याऽन्तर्बिम्बितादिन्दुकोणाद्वीचीमौर्वीं विद्रुमेष्वासभाजम् ।
फेनश्रेणीतूलविक्षेपपूर्वा शौरेश्शय्याऽनेहसा शोद्ध्यते यः ॥ ८ ॥
अम्भोवाहानम्बु पातुं समेतांश्छम्पापाशालम्बनाच्चालयित्वा ।
नाळीकाक्षप्राकृकृतान्नाटयन्ते माथक्रीडां यत्पयोमर्त्यडिम्भाः ॥ ९ ॥
मेदिन्याश्चेन्मेखलादामलीलामाबिभ्राणस्याम्भसामाकरस्य ।
अच्चद्रत्नस्यात्तमौखर्यपूर्तेरन्तःकीलभ्रान्तिमासूत्रयन्तम् ॥ १० ॥
पारावाराऽपारसीमोपकण्ठे प्रापय्येशं पङ्क्तिकण्ठाभियातिम् ।
उर्वीपुत्र्या योजयित्वा जगत्यामर्थोपेतां यान्तमालिप्रतीतिम् ॥ ११ ॥
आत्मन्यारादन्तरीयायमाने विस्तारस्स्यात्कीदृशो वेति वेत्तुम् ।
उर्व्या दुर्वारोर्मिकाकङ्कणाङ्कं मन्ये नीतं कौतुकान्मानहस्तम् ॥ १२ ॥
मङ्क्त्वा मायादंष्ट्रिणोदस्यमानां मध्येपाथः क्ष्मामिवाऽऽविर्भवन्तीम् ।
नेतुर्भूजामातुरिष्टानि दातुं **सेतुं** सीताश्वासहेतुं य एति ॥ १३ ॥
भूयो व्यावर्त्यापि भूम्ना चमूनां पश्चात्कुर्वन् पाथसामेष राशिम् ।
**रङ्गस्थानं** राजसंसेवयाऽग्रे वल्गच्चेताः वासरैः कैश्चिदाप ॥ १४ ॥
आसाद्योर्वीनायकस्यौपकार्यामग्रद्वारे सोऽवरूह्यौपवाह्यात् ।
औत्सुक्येनातीतकक्ष्याविशेषस्तं प्राणंसीत्तस्थिवांसं सभायाम् ॥ १५ ॥
केचित्स्वामिन् **केरलेश**प्रयुक्ता वर्तन्ते प्राग्द्वारि ते मन्त्रिवृद्धाः ।
इत्युक्त्वाऽसावेतदीयानुमत्या तस्याभ्याशंताननैषीत्सभायाम्[1] ॥ १६ ॥

[1] नृपेन्दोः—घ.

कर्णायुष्यस्यन्दिभिः काव्यबन्धैः कालक्षेपं कल्पयन्तं कवीन्द्रैः ।
पाण्यग्रेण प्रक्कणत्पारिहार्यं वीटीं पश्चाद्वयापृतामाददानम् ॥ १७ ॥

चञ्चद्वासःपल्लवं चामराणां मन्दस्पन्दैर्मारुतक्षीरकण्ठैः ।
पारंपर्यात्प्रश्रयं व्यश्नुवानै रज्यत्स्वान्तैस्सेवितं राजवर्गैः ॥ १८ ॥

देया दृष्टिः पूर्वमत्रेति पात्रे तद्भृत्यौघैर्दर्शितानर्घरत्नम् ।
व्याचक्षाणं विश्रुतैर्नीतिमार्गैः कूटस्थानां क्ष्मापतीनामिवैक्यम् ॥ १९ ॥

औदार्येणाऽवेदयन्तं किलोर्व्यामाविर्भावान्नन्दनानोकहानाम् ।
विश्वत्रय्यां व्यत्ययाद्वीरलक्ष्म्या विश्राम्यन्त्या विश्रमस्थानमेकम् ॥ २० ॥

उच्चैर्भूतं राशिमुच्चावचानां सौजन्यौजश्शौर्यधैर्यादिमानाम् ।
शक्नोत्येको नेति धर्त्तुं धरित्रीं सृष्टं प्रायश्शेषसाहाय्यहेतोः ॥ २१ ॥

दत्वाऽऽहारं देवताभ्योऽवतीर्णं कालादिन्दुं क्षालितान्तःकलङ्कम् ।
सौशील्यस्याऽऽलम्बनं साम्परायाचार्यं शौर्यौदार्यसङ्केतगेहम् ॥ २२ ॥

साक्षात्कारं शारदाया दयाया जीवन्न्यासं जन्मसाफल्यमक्ष्णोः ।
आरादालोक्यैनमौत्सुक्यभाजस्सर्वे **चेरोर्वीश**साचिव्यकाराः ॥ २३ ॥

शिष्टैः कैश्चित्सेव्यमानं सविद्यामानं संस्थेमानमानंसिषुस्ते ।
मर्त्याधीशो माननापूर्वमेतान् संप्रेक्ष्याग्रे वीक्ष्य स क्रोधरूक्षः ॥ २४ ॥

नीत्या दण्डं नीयतां कश्चिदेवेत्युक्त्वा दुष्टं मन्त्रिहस्तेऽतनिष्ट ।
आक्रम्य त्वद्राज्यमाजानसिद्धं सीमालङ्घी शिक्षितश्चे**रभूपः** ॥ २५ ॥

पाहि क्षोणीं प्राक्तनीमित्यभाणीत्**पाण्ड्योर्वीशं** पालको नीतिभाजाम् ।
राजीवाक्षस्यांशराज्योपलम्भात्सेवा श्लाघ्या श्रीमदङ्घ्र्योरथापि ॥ २६ ॥

आराध्या ते तावदाज्ञेति चोक्त्वा भक्त्या नत्वा प्रस्थितः **पाण्ड्यभूपः** ।
प्रस्थानाय श्रीपतेरभ्यनुज्ञां प्राप्तुं **पाण्डयस्थापनाचार्य** एषः ॥ २७ ॥
[1]पारे सिन्धोः प्राप्तसंवेशमीशं पद्माबन्धुं पार्थिवेन्दुः प्रणन्तुम् ।
मोक्षागारं प्राविशन् मोहदूरं देवागारं दत्तनेत्रोपहारम् ॥ २८ ॥
([2]आनन्देनोत्तालमश्रान्तसंविद्दीपं प्रादुर्भक्तिपुष्पोहारम् ।
लास्योदग्रे रङ्गमेत्यान्तरङ्गे नेत्रद्वन्द्वं निर्निमेषं नृपेन्दोः) ॥ २९ ॥
अङ्के पादावर्पयित्वा रमाया व्यासज्याङ्गं व्याक्रियाभाजि तल्पे ।
दत्वा पाणिं दक्षिणं मौलिदेशे प्रादुस्स्वापं पाणिमन्यं प्रसार्य ॥ ३० ॥
वासश्शय्याशीविषश्वासधूतं वारंवारं वारयन्तीमुरोजे ।
लक्ष्मीं रागाद्वैतरङ्गैरपाङ्गैरालोक्यान्तर्हासहृष्यत्कपोलम् ॥ ३१ ॥
नाभीभाजो नायकस्योक्तिदेव्या नानासूक्त्या नर्तितस्वापदानम् ।
आनीलानामङ्गभासां विलासादाचक्षाणं तत्त्वमम्बोधराणाम् ॥ ३२ ॥
स्वाधीनोक्तिप्रेयसीशीर्षरत्नं स्वाराज्यश्रीवल्लिकोपघ्नदण्डम् ।
कारुण्याम्भोराशिजीमूतमुर्व्याः कान्तोऽपश्यत्कौस्तुभार्कोदयाद्रिम् ॥ ३३ ॥
देवं दूरादेव देदीप्यमानं दृष्ट्वा भक्त्या क्लृप्तदण्डप्रणामः ।
आसाद्यासावाद्यमभ्यर्च्य पुष्पैर्वाक्पुष्पैरित्यर्चयद्वासुदेवम् ॥ ३४ ॥
वाचोरीत्या वैभवं तावकीनं नाथस्स्तोतुं नैवशक्तास्समस्ताः ।
प्रादुश्शाखाचङ्क्रमाः प्रायशस्ते माहात्म्योक्तौ मादृशां कोऽधिकारः ॥३५॥

[1] This verse was found after No. 13 in p. 3 in a few manuscripts. I have put it here on the strength of the majority of manuscripts and as it agrees with the context here better than after No. 13.

[2] (        ) क, ख, ग, घ.

प्रादुर्भूते त्वत्प्रियाया रमाया नाथ ख्याते नन्दनेऽनुग्रहाख्ये ।
मुच्यन्तेऽमी मौनिनो मातृगर्भागारात्कारागारतः कैटभारे ॥ ३६ ॥

पारीणास्ते चिन्निदानं पदाब्जं येन द्रष्टुं पाटलं कैटभारे ।
देदीप्यन्ते भक्तिदिव्याञ्जनेन स्पष्टां दृष्टिं प्राप्य एतेप्यवन्याम् ॥ ३७ ॥

चिन्तामन्तस्त्वन्निबन्धां कदाचिद्धन्ताहन्ता बन्धवो नाश्रयन्ते ।
मन्दाभूयो जन्मचिन्तां दुरन्तां वन्दारूणां यान्ति मन्दारशाखिन् ॥ ३८ ॥

पातिव्रत्यं या नृणां न त्यजन्ती भक्तिस्त्विद्वेद्वेद्ययोः पादयोस्ते ।
सेयं संवित्सैव विद्याऽनवद्या सौशील्यं तत्सोन्ववायोऽपि धन्यः ॥ ३९ ॥

पद्माबन्धो ते हि बाधिर्यवन्तो नामप्रेम्णा नैव शृण्वन्ति ये ते ।
ते जात्यन्धा ये न पश्यन्ति हि त्वां ते मूका ये न स्तुवन्ति स्थिरं त्वाम् ॥

मूलं मुक्तेर्मोहतृष्णालवित्रं लोलम्बश्रीलोभनीयप्रतीकम् ।
आलम्बं त्वामन्तरेण श्रुतीनां कूलं नेतुं कोविदः को भवाब्धेः ॥ ४१ ॥

धन्यं मान्यं कोऽपि देवैस्त्वदन्यैर्मन्यन्तां स्वं मानवा दानवारे ।
अन्यं कञ्चित्त्वां बिनाऽऽम्नायमार्गाध्वन्यं नाहं वेद्मि जन्यन्तरेऽपि ॥ ४२ ॥

कुक्षौ निक्षिप्यैव लोकाननन्तं कुण्ठोत्कण्ठास्त्वामुपास्यं निरस्य ।
मान्यान्केचिन्मन्वते यत्वदन्यान्मायाप्येषा माधव त्वन्निबन्धा ॥ ४३ ॥

वेत्ता वेद्यो वीक्षको वीक्षणीयो भोक्ता भोज्यः पालकः पालनीयः ।
ध्याता ध्येयः पूजकः पूजनीयः स्तोता स्तुत्यो **रङ्गनाथ** त्वमेव ॥ ४४ ॥

मीनाकारा दृङ्निमज्येन्दिरायास्सौन्दर्याब्धौ श्रुत्यवाप्तेति सत्यम् ।
मङ्क्त्वा सिन्धौ मार्गणाय श्रुतीनां प्रायःपाठीनात्मना पर्यणंसीः ॥ ४५ ॥

जेता कश्चिन्मीनलक्ष्मा जगत्यामन्यः पाठीनालयोऽभूद्गरीयान् ।
इत्येतस्य प्रायशो हेतुरासीन्मीनाकारस्वीक्रिया ते मुरारे ॥ ४६ ॥
नाधारश्चेन्नाथकूर्माकृतिस्ते क्ष्माभृच्छक्रस्यार्णवे घूर्णितस्य ।
प्रादुर्भूयात्किं सुधापूर्णकुम्भः किं प्रादुष्यात्खेचराहारवार्ता ॥ ४७ ॥
गम्भीराम्भोगाधतत्वं समस्तं दृष्ट्वा पङ्कं दर्शयन्तीव सिन्धोः ।
उर्वीं मग्नामुद्धरन्ती न केषां वाराही ते व्यक्तिराराधनीया ॥ ४८ ॥
हस्तोदस्तस्वाङ्कलीनाऽसुरोरःप्रत्यग्रान्त्रं त्वां नृसिंह्म प्रतीमः ।
पारावारं वीचिकोत्क्षिप्तपाथः पानासीदन्मेघसौदामिनीकम् ॥ ४९ ॥
प्रादुस्तोयं प्रोन्मिषत्वत्पदाङ्कं वैरिञ्चाण्डं वारिजाताक्षमन्ये ।
त्यक्त्वा दैत्यांस्त्वज्जुषो जैत्रलक्ष्म्याः प्रायो व्यज्यत्पल्लवं पूर्णकुम्भम् ॥ ५० ॥
पादेनोर्ध्वं प्रस्थिताजाण्डरन्ध्राद्बाह्याकाशं व्याप्य तत्राप्यमान्ती ।
व्यावृत्ताः किं माधव व्योमसिन्धुव्याजात्कीर्तिर्व्यज्यते तावकीना ॥ ५१ ॥
नालीकाक्ष त्वत्कनाराचधाराक्रूरापातात्प्रस्फुटत्क्रौञ्चरन्ध्रम् ।
जानीमस्ते विस्तृतं जैत्रलक्ष्म्याः केलीसौधाभोगलक्ष्यं गवाक्षम् ॥ ५२ ॥
आकृष्टासीत्कर्कशेनार्ककन्या राजीवाक्ष त्वद्भुजालाङ्गलेनं ।
पाथस्तस्याः किं प्रलम्बावरोधस्त्रैणस्यारादक्षिकोणे विधातुम् ॥ ५३ ॥
राम त्वत्केनेषुणा राक्षसेन्दोः पङ्क्तौ मूर्ध्नां प्रायशः पातितायाम् ।
एकं मुक्त्वोर्वीमगुर्वीं दधाना व्यर्था मूर्ध्नामालयो व्यालनेतुः ॥ ५४ ॥
केनाप्यक्ष्णोनैवलक्षीकृताङ्घ्रिः पुष्यद्गात्रः पूतनाप्राणवातैः ।
गोपस्त्रीणां त्वं भुजङ्गोऽसिविष्णो तन्मे चित्रं भासि यत्तार्क्ष्यवाहः ॥ ५५ ॥

संविज्ज्योतिश्छादयित्वाऽन्तरान्ध्यं व्यावृण्वानेनार्णवं चोत्पथाख्यम् ।
धृत्वा पिञ्छं देव विद्या त्वयाऽग्रे दैतेयानां दर्शितेवैन्द्रजाली ॥ ५६ ॥

आजानेयस्याङ्घ्रिनिर्घातधारा पातक्षुण्णैः पांसुभिर्धूसराङ्गम् ।
क्षिप्तो भारश्शिक्षणाद्दुर्मदानामित्येवोर्व्याश्श्लिष्टमीडे भवन्तम् ॥ ५७ ॥

स्तावंस्तावं देवमेवंविधानं वाचांगुम्फैः वावदूकेन्द्रकल्पम् ।
आनन्दाब्धौ क्रीडति स्माङ्गलग्नां रोमाञ्चैः किं व्यञ्जयञ्छैवलालीम् ॥५८॥

हरिपदनुतिचर्यानन्तरं मानवाना
मधिपतिरुपकार्यामासदन्नीतिधुर्यः ।
अधिपदमपि विष्णोश्चारयन्गोप्रपञ्चा-
नपरगिरिमकाङ्क्षीदाप्तुमह्नामधीशः ॥ ५९ ॥

इति राजनाथकृतौ अच्युतरायाभ्युदये महाकाव्ये सप्तमस्सर्गः

## अष्टमस्सर्गः

पश्चिमाचलदरी शबरीभिर्भ्रान्तितोऽथ मणिकन्दुकमध्ये ।
ताडितो नु करतामरसाभ्यां भानुमानधित पाटलिमानम् ॥ १ ।

आत्तवत्युदयमम्बुजबन्धावग्रतः प्रववृतेऽथ पतिष्णौ ।
छायया निववृते जगति स्यात्सम्पदीव विपदि क्व सहायः ॥ २

किं व्यपोहितुमना भृगुपातात्सत्पथाक्रमणसम्भवमंहः ।
अंशुसन्ततिरशीतमरीचेरैक्ष्यत क्षितिभृतामधिशृङ्गम् ॥ ३ ॥

गाधतत्वमधिगत्य गभीरे मङ्क्तुमेष चरमाम्बुधिमध्ये ।
आयतान् किमपि दीधितिदण्डानब्जिनीपतिरपातयदग्रे ॥ ४ ॥

पश्चिमाब्धिलहरीभरडोलाशायिनां सलिलमर्त्यशिशूनाम् ।
रत्नगुच्छ इव रश्मिनिबद्धं लम्बते स्म गगने रविबिम्बम् ॥ ५ ।

दिक्षु विश्लथमवेक्ष्य तरक्षोश्चर्म लास्यसमये शशिमौलेः ।
न व्यलोकि नलिनीपरिणेतुर्गोकुलं निखिलमाकुलमेव ॥ ६ ॥

कूजति क्वचन कौशिकलोके वाममेव पतिरेष वसूनाम् ।
आततान भुवनान्तरयात्रा तत्फलं नु सुखमेष्यति भूयः ॥ ७ ॥

चक्रवाकमिथुनस्य सरस्यां मांसलश्वसनमारुत एव ।
विप्रयोगपरिरम्भविशेषं विश्लथीकृतगरुं न विषेहे ॥ ८ ॥

चञ्चुविश्लथबिसाञ्चितमार्गश्चक्रयोर्विजघटे समवायः ।
अङ्कनं विरचयन्निव[1] भूयरसङ्गमस्थलसुखावगमाय ॥ ९ ॥

शावकानधिमनः कणिशालीं चञ्चुसन्ततिषु चर्वितशेषाम् ।
नीडसीम्नि च निधाय कटाक्षान् [2]सत्वरं समवलन्त शकुन्ताः ॥ १० ॥

अस्तशैलतटकानन[3]लीनैरन्धकारसुभटैरुपरुद्धा ।
अग्रतः प्रचलितस्य खरांशोरंशुसन्ततिरिवै[4]क्ष्यत सन्ध्या ॥ ११ ॥

नेक्ष्यते दिन[5]पतिर्नलिनीनां नर्म किञ्चिदपि नाङ्कुरतीति ।
व्यानशे दश दिशोऽपि विचेतुं तत्सुतेव तमसां परिपाटी ॥ १२ ॥

वीक्ष्य किञ्चिदभिलक्ष्यमुडूनां मण्डलं विशिथिला[6]ण्डविमोहात् ।
चुक्रुशुश्शकुनयः किमशक्ता विप्रकर्षिणि[7] विहायसि गन्तुम् ॥ १३ ॥

दीपपङ्क्तिर[8]वभिद्य तमिस्रं दीपिता किल रुषा पुनरस्मिन् ।
कुत्रचिन्निलयकोणनिलीनें कज्जलभ्रुकुटिभङ्गमकार्षीत् ॥ १४ ॥

इत्वरीजनहितं करवाणीत्युत्थितं किल निपत्य कृशानौ ।
दृश्यते स्म तिमिरं दिवसान्ते दीपिकोन्मिषितकज्जलदम्भात् ॥ १५ ॥

आवृते तमसि गाढमधस्तात् छायया परिणतात्मनि दीपाः ।
कज्जलालिकपटेन तदीयं वर्गमालयगृहीतममुञ्चन् ॥ १६ ॥

नृत्यतः पुरहरस्य निटालज्वालजालमिलनेन निलीय ।

[1] किल—अ, छ.
[2] चत्वरम् स—च.
[3] लीलैः—च.
[4] वैक्षत—क, ग, ङ, च, ज.
[5] मणिर्न—झ.
[6] विमोक्षात्—छ, वि.
[7] कर्षणि—च.
[8] रुपभिद्य—अ, छ, झ.

स्यन्दमानमिव सन्तमसानां [1]छद्मना त्रिदशवर्त्म चकाशे ॥ १७ ॥

प्रच्युतं दिनमणिं भुवनश्रीभूषणार्हमचिरेण विचेतुम् ।
दीपिका इव दिशाभिरुदस्तास्तारकास्तत इतो दिवि रेजुः ॥ १८ ॥

अङ्गजागमलिपेरुडुनाम्नो व्यञ्जनाय विमलाञ्जनलेपः ।
[2]शाम्यदर्यमशिलाशिखिधूमस्सत्पथाख्यवनसामजयूथम् ॥ १९ ॥

स्यन्दमानमिव सिन्धुरदाने सप्ररोहमिव शाड्वलदेशे ।
उत्पलेष्विव विकस्वरमुच्चैष्षट्पदेष्विव सपक्षवितानम् ॥ २० ॥

सान्ववायमिव सैरिभवर्गे सावलेपमिव शक्रशिलासु ।
सावलम्बनमिवोत्पलजाले सप्रतिष्ठमिव शैवलिनीषु ॥ २१ ॥

पाणिनेर्मतमिवाखिललिङ्गव्यक्तिकृद्विविधशब्दविशेषम्[3] ।
न्यायशास्त्रमिव साध्वनुमानग्राह्यनिह्नुतसमस्तपदार्थम् ॥ २२ ॥

विष्णुरूपमिव जातमहत्त्वं व्याप्य विश्वमखिलं बहिरन्तः ।
तत्त्ववाक्यमिव तारकरूपव्यञ्जकं[4] वनमिवात्तपलाशम् ॥ २३ ॥

सान्ध्यवृत्त्यपि निरङ्कुशचारं भानुयातमपि विश्लथभानु ।
[5]कृष्णरूपमपि सङ्कुचदब्जं किञ्च विश्लथसुदर्शनकेलि ॥ २४ ॥

मन्मथेभमदभेषजमाशामानिनीमृ[6]गमदद्रवलेपः ।
पान्थबृन्दगरलं भुवनान्तः[7] सान्द्रमन्धतमसं समरुन्ध ॥ २५ ॥

सञ्चितं किमु पुटेष्ववटानां पुञ्जितं किमचलेष्वखिलेषु ।

[1] नात्मना—च.
[2] शाठ्यमर्य—च.
[3] वितानम्—क, ग, च.
[4] व्यञ्जनं—अ.
[5] विष्णुरू and कृष्णरूप—झ.
[6] मदार्द्रविलेप:—ज.
[7] न्तं—छ.; all other manuscripts read भुवनान्तः

विस्तृतं किमु विहायसि चासीच्छार्वरं जगति सार्वपथीनम् ॥ २६ ॥

ध्वान्तपङ्क्तिभिरभूयत मेघैर्ज्योतिरिङ्गणमयैर्हरिगोपैः[1] ।
इत्वरीभिरपि चत्वरकोणे गत्वरीभिरचिरांशुभिरेव ॥ २७ ॥

अंशुमालिनि विशत्यपराद्रिं केचिदस्य किरणास्सविलम्बाः ।
शार्वरैर्जगृहिरे किलहस्तग्राहमञ्चिततमोमणिदम्भात् ॥ २८ ॥

क्रीडतां किमपि कीटमणीनां कैतवेन कनकद्रवचित्रैः ।
रच्यमानमिव राजरमण्या युक्तमम्बरमुदैक्षि रजन्याः ॥ २९ ॥

सान्द्रसन्तमससामजपङ्क्तेः तारवज्रखचिताभ्रकुथायाः ।
प्रस्फुरद्द्युतितमोमणिजालं पद्मकालिवपुषा परिणेमे ॥ ३० ॥

स्वैरिणीयमवकुण्ठनवासस्स्रग्विलेपन[2]विभूषणसङ्गात् ।
सख्यमञ्चति ममेति किमस्यास्स्वैरचारमरुधन्न तमिस्रम् ॥ ३१ ॥

[3]विश्लथे दिनमणौ हरचूडारत्नमभ्रवलये लघु दातुम् ।
तत्स्फुतञ्जतु किलाऽजनि सन्ध्यापावके समयतापितमन्धम् ॥ ३२ ॥

निस्सरत्तिमिरदस्युसहस्रानुद्रुतेन चरमाद्रिनिकुञ्जे ।
हारमौक्तिकचयैरिव कीर्णैरात्मरक्षणकृते मिहिरेण ॥ ३३ ॥

अंशुकन्दलर[4]सादमृतांशोः क्रीडतोत्पिबकिशोरकुलेन ।
कौमुदीह्रदजुषा हृतमुक्तैः कोरकैरिव सुधापृषतानाम् ॥ ३४ ॥

सन्ध्यया नटितपल्लवशोभासम्पदां[5] सकलदिग्लतिकानाम् ।

[1] गणैः—च.
[2] विभूषणमासीत्—छ; विनीलिम—अ, क.
[3] प्रच्युते—झ; all other manuscripts read विश्लथे.
[4] विसैर—ज.
[5] दा—च.

[1]स्फोटपङ्क्तिभिरिवाकुलकोकश्वासपावकशिखाक्रमजातैः ॥ ३५ ॥
चञ्चरीककुलझङ्कृतिमन्त्रावृत्तिपूर्वमधिविष्णुपदाग्रम् ।
आदरेण कुसुमैरिव कीर्णैरागमाय कमितुः कुमिदिन्याः ॥ ३६ ॥
द्योमणिर्न [2]हृत इत्युडुराजप्रत्ययाय दशदिक्प्रमदाभिः ।
अन्तरिक्षफणसीम्नि विकीर्णैरक्षतैरिव निशाफणवत्याः ॥ ३७ ॥
नाकयोषिदुपभुक्तनखाग्रोन्मुक्तचन्दनलवैरिव लग्नैः ।
अन्धकारभरकर्दमजातैरा[3]ङ्गजैरिव यशोङ्कुरजालैः ॥ ३८ ॥
रोहिणीशमनुचिन्त्य तमिस्रै[4] रोमहर्षणजुषः क्षणदायाः ।
निस्सृतैरिव निदाघकणौघैस्स्तारकैस्स्तबकितं वियदासीत् ॥ ३९ ॥
कौमुदीपयसि कल्पितभूयःकेलिषूत्पिबकिशोरकुलेषु ।
नाकसीम्नि[5] नलिनीदलकीर्णैस्तत्कणैरुडुगणैस्समभावि ॥ ४० ॥
अर्दितस्य जगतस्तिमिरौघैरर्पितो[6] नु कृपयाऽभयहस्तः ।
उद्ययौ जलनिधेरुडुजानेरंशुपल्लवमनुज्झितरागम् ॥ ४१ ॥
द्योतलं [7]ततमिवोपरि नीतं दूरिता इव दिशो विदिशोऽपि ।
प्रापितेव धरणी परिणाहं रोहिणीविटरुचां निचयेन ॥ ४२ ॥
अर्कहेमकलशेऽर्णवमग्ने कालचक्रघटियन्त्रवशेन ।
[8]उत्थितोऽयमितरो[9]द्धृतरश्मिः सम्भृतामृतरसश्शशिकुम्भः ॥ ४३ ॥

[1] फेनविन्दुभिः—च; फेनपङ्क्तिभिः—झ, सूनपङ्क्तिभिः—छ, झ.
[2] भृत—छ.
[3] सङ्गजै—च.
[4] तमिस्रा—छ.
[5] मनलिनी—च.
[6] रर्चितो—च; रपगतो—छ.
[7] द्रुत—
[8] उद्धृतो—ङ.
[9] राश्रिततर—घ, च.

मज्जतो महति सन्तमसाख्ये वारिधौ तरणिभङ्गवशेन ।
पालनाय जगतः परमासीदात्तरश्म्युडुपमण्डलमग्रे ॥ ४४ ॥

शर्वरीरमणबिम्बमलासीच्छातकुम्भभृतसाप्तपदीनम् ।
अम्बरे नवयवा[1]ञ्चितलाक्षामुद्रिकेव समयेन वितीर्णा ॥ ४५ ॥

कुङ्कुमेन रजसा कुनटीनां कोरकैरपि कुसुम्भजपानाम् ।
रञ्जितं नु सविधूदयरागं विष्वगम्बरतलं विलुलोके ॥ ४६ ॥

सन्ध्यया सरसकुङ्कुमचर्चासंपदं चरमदिक् श्रयतीति ।
ईर्ष्यया किमु दधौ हरिदैन्द्री तां विधोरुदयरागनिभेन ॥ ४७ ॥

सञ्चरत्सु दिवि पत्रिषु सन्ध्याबालिकां बत निरीक्ष्य सदोषाम् ।
तन्त्रविद्रतिपतेर्द्विजराजो विप्रयुक्तबलिमेव वितेने ॥ ४८ ॥

चञ्चुकोटिमिषदंशिकयाऽऽशाभूषणाय नु चकोरकलादाः ।
[2]सौधजालनिभयन्त्रणपट्टाच्चन्द्रधाम चकृषुस्तपनीयम् ॥ ४९ ॥

[3]रागशालिरुचिदण्डमहोल्कामण्डलान्यसमचण्डमरीचिः ।
शीर्णतारकु[4]लशीकरजाले शार्वरद्विपचयेऽपि चकार ॥ ५० ॥

पीडयन् रथपदस्तनयुग्मं श्लिष्यति स्म रजनीं शिशिरांशुः ।
कूलमुद्रजमलीयत सन्ध्याकुङ्कुमद्रवविलेपनमस्याः ॥ ५१ ॥

बिम्बितस्सविधगैरिकरागः प्राग्गिरेरुदयरागमिषेण ।
प्रत्यभादुडुविटस्फटिकेऽस्मिन्विप्रकर्षिणि न भाति यदेषः ॥ ५२ ॥

रागवेषजुषि रोषकृशानौ शाम्यति [5]प्रदलनात्तिमिराणाम् ।

[1] कवचलाञ्चित—छ.
[2] षण्डजाल—छ.
[3] नाग—छ; राग is also noted as a variant in छ.
[4] करशी—अ.
[5] प्रलयनात्—छ.

तद्दृढस्थितिवशेन तमीशे कालिमाऽजनि कलङ्कमिषेण ॥ ५३ ॥

आलवालमनुरागलतायाः कालशूलधरपाणिकपालः ।
मारदिग्विजयमङ्गलकुम्भो मर्मभिद्विरहिणां जलयन्त्रम् ॥ ५४ ॥

ध्वान्तभूतशमनाय दिनान्तप्रस्तुतो विमलभास्मनयन्त्रः ।
अर्दितस्य किरणैरहिमांशोरातपत्रमखिलस्य जनस्य ॥ ५५ ॥

कौमुदीकलशसागरमध्यद्वीपमङ्कतुलसीसितधिष्ण्यम् ।
वासराधिपवियोगगृहीतं वर्तुलं फलकमम्बरलक्ष्म्याः ॥ ५६ ॥

नर्ममारुतपटस्तटिनीनां नायकेन ततरश्मिविमुक्तः ।
इन्दुबिम्बमिदमैक्षि विहायो नन्दगोपतिशिशोर्नवनीतम् ॥ ५७ ॥

प्रस्थिते स्फुटरतीश्वरचापारोपणानुगुणमम्बरवन्याम् ।
रामचन्द्र इव[1] पादनिवेशादस्य जीवनमवाप शिलाऽपि ॥ ५८ ॥

पद्मिनी [2]ततकरं हिमभासा भानुमालिनि गते परिरब्धा ।
मीलदब्जनयनाऽजनि सैषा पांसुला हि कमितुः [3]पुरतोऽपि ॥ ५९

मञ्जुलालिवलयारवमद्धा मन्दमुच्चलितकोरकहस्ता ।
उत्पलिन्यधिभुवाऽर्पितमङ्के पादपल्लवमसौ [4]समवोढ ॥ ६० ॥

पद्मिनी पतिशुचा मकरन्दस्तन्यतोऽप्यलिशिशून्न पुपोष ।
कूजतस्समपुषन्कुमुदिन्यो युज्यते [5]विपदि सौहृदमेतत् ॥ ६१ ॥

[1] इह—झ.
[2] द्रुततरं ह्युडुराजात्—छ.
[3] परतोऽपि—छ.
[4] सोढ—ख, ग, छ.
[5] सपदि—अ, छ.

पङ्कजेषु वसतिं भ्रमराणां नाऽसहिष्ट नलिनी रविशून्या ।
वल्लभे क्वचन जग्मुषि का वा वाञ्छतीतरजनस्थितिवादम् ॥ ६२ ॥

चालयन्सनिनदं भ्रमरालीलेखिनीं दिनविरामसमीरः ।
नूनमुत्पलदलेषु सुमेषोर्विश्वशासनलिपिं विलिलेख ॥ ६३ ॥

रोहिणीरमणरागकृशानुप्लुष्टसन्तमसभास्मनराशिः ।
शीर्णसान्ध्यरुचिसूनवितानव्योमशाल्मलिविनिर्मलतूलः ॥ ६४ ॥

तारकाङ्कुरपयःपरिवाहस्त्या[1]जितस्ततइतस्समयेन ।
व्योमलङ्घनकृते विधुहंसव्यापृता विशदपक्षतिपाली[2] ॥ ६५ ॥

इन्दुबिम्बनिभनीविविराजद्यामिनीविततधौतदुकूलः ।
कामभूरमणदिग्जययात्राकालसूचकशरद्धनसंघः ॥ ६६ ॥

सम्भवक्षणसमुत्थितमिन्दुं कौतुकादनुगतः कलशाब्धिः ।
इन्दुरागलहरीमयहेम्नः पाण्डरीकरणपारदजातम् ॥ ६७ ॥

अन्धकारविजयादमृतांशोर्निस्सृतं नवयशोनिकुरम्बम् ।
सत्पथालयसुधारसचर्चा चन्द्रिका दिशि चमत्कृतिमूहे ॥ ६८ ॥

काल्यूनि दिवि कर्षति शाणे शर्वरीरमणचन्दनखण्डम् ।
तद्द्रवैरिव तथा दधुराशाश्चन्द्रिकाभिरनुलेपनशोभाम् ॥ ६९ ॥

व्योमसीमसुरभेर्विधुमण्डल्यूधसस्स्वयमधस्तनवाहि ।
सम्भ्रमेण चलचञ्चुचकोरैश्चन्द्रिकालहरिदुग्धमधायि ॥ ७० ॥

प्राङ्गणेषु पटमण्डपिकानां प्रस्तुताऽह्वकथा[3]परिवाहम् ।

[1] स्थापितः—छ. [2] पालिः—छ .
[3] परिहासम्—छ, झ; परिवाहम् is also given by झ.

वीचिकां जगदिदं विधुभासां शीतलां शिबिरवासि सिषेवे ॥ ७१ ॥

उच्चण्डान्मण्डलाग्रान्मलिनतरतमः कण्टकान्खण्डयित्वा
स्वैरं जातप्रचारं सकलमपि जगत्कल्पयन्नद्भुतश्रीः ।
ज्योत्स्नापूरैरपारैर्विशददशदिशस्फूर्तिमत्येव कीर्त्या
ख्यातं वीराच्युतेन्द्रक्षितिपमनुययौ बन्धुरिन्दीवराणाम् ॥ ७२ ॥

इति[1] राजनाथकृतौ[2] अच्युतरायाभ्युदये[3] महाकाव्येऽष्टमस्सर्गः

[1] त्यच्युतरायाभ्युदये अष्टमः—झ, [2] दयनाम्नि-
[3] थस्य—च, छ.

# नवमस्सर्गः

हरिणीदृशाऽन्यतमया सविभ्रमं हरिचन्दनं धृतमुरोजचक्रयोः ।
अनयोः कदाऽपि विरहो न सम्भवेदिति शाश्वत[1]स्थितिरिवाऽऽतपाङ्कुरः ॥
मुकुरे [2]मुधाकृतसुधांशुमण्डले प्रतिबिम्बनं प्रति मृगीदृशो बभौ ।
गदितुं प्रियागममुदं समागतो निजमूर्तिभेद इव तन्मनोगतः ॥ २ ॥
स्वनिरोधिनीं किल पयोधरोन्नतिं समवेक्ष्य सान्त्वयितुमाननेन्दुना ।
परिरम्भणे वलयितौ भुजाविव प्रमदा [3]बभार नवहारमेकिका ॥ ३ ॥
परया कयाऽपि मृगनाभिपङ्किले परिणाहशालिनि पयोधर[4]स्थले ।
युवलोकलोचनगतागतोचिता नवहारमौक्तिकशिला [5]न्यधीयत ॥ ४ ॥
अवलोक्य हंसकुलमञ्चितैर्गतैरभिभूतमेतदभिधानसाम्यतः ।
विहितागसेव चरणावलम्बिना विललास हंसकयुगेन काचन ॥ ५ ॥
विटमण्डलीविजयिनो मनोभुवो विजयाक्षरावलिमिवेतरस्त्रियः ।
कुचशैलसीमनि कुरङ्गनाभिना विलिलेख पत्रलतिकां प्रसाधिका ॥ ६ ॥
युवनेत्रखञ्जनयुगेन खेलता गदितं नितम्बफलकावलम्बितम् ।

[1] शाश्वती स्थि—छ.
[2] मुखाकृति—छ.
[3] च भार—छ.
[4] राङ्कणे—ख, घ, ङ, छ.
[5] किलादधे—झ.

अवितुं मनोजनिधिमात्तवेष्टनः परया फणीव मणिमेखला दधे ॥ ७ ॥

इतरस्त्रियस्सरसयावकार्पणाच्चरणौ निकाममरुणौ व्यराजताम् ।

पदपङ्क्तिभिस्स्वपरिपन्थिपङ्कजप्रतिसृष्टये धृतरजोगुणाविव ॥ ८ ॥

कुटिलभ्रुवा कुटजसूनगर्भकं कबरीभरे विनिहितं कयाचन ।

वदनाभिरूप्यवसुचौर्यवाञ्छया रुरुचे निगूढ इव रोहिणीविटः ॥ ९ ॥

मकरी सखीविलिखिता महीयसोः कुटिलभ्रुवः कुचमहीभृतोस्तटे ।

विषमायुधस्य विशतो मनोगृहं बहिरर्पितामनुययौ पताकिकाम् ॥ १० ॥

मुखरामणीयकमुधासुधाम्बुधौ विटमानसे विरचितावगाहने ।

उपजातमेकमुपरीव बुद्बुदं नतमध्यमाऽवहत नासिकामणिम् ॥ ११ ॥

अधिफालमायतदृशाऽन्य[1]येया धृतं कुटिलं कुरङ्गमदभङ्गचित्रकम् ।

युवमण्डलीधृ[2]तिगलग्रहोचितो रुरुचेऽर्धचन्द्र इव रूपदर्शितः ॥ १२ ॥

इतरस्त्रिया वदनमिन्दुमण्डलं परिभूय चन्दनललामरेखया ।

अपि तत्कलाश्रियमजीजयद्यतः किमु तिष्ठते स्वयमणीयसे महान् ॥ १३ ॥

कुचशैलसीम्नि कुटिलालकाऽपरा कुतुकेन यं व्यधित कुङ्कुमद्रवम् ।

स बभार वल्लभनखाङ्कचन्द्रमः[3]शकलस्य सान्ध्यसुषमामुदेष्यतः ॥ १४ ॥

कटकेन मौक्तिककरम्बितश्रिया समयोजयच्चरणपल्लवं परा ।

अपहृत्य वैरमितरेतराश्रितं शशिपद्मयोरिव सखित्वकारिणी ॥ १५ ॥

अबलास्वलङ्कृतितरङ्गितादरास्वपरा वियोगमधिगम्य कामिना ।

अधिगण्डमर्पितकराञ्चलच्छलादवतंसपल्लववती किलाऽरुचत् ॥ १६ ॥

[1] अन्यथा—च, झ.

[2] धृतगल—च, छ, झ.

[3] माश्शक—अ, क, ख, ग, घ, ङ.

परिचारिकांसभुवि बाहुवल्लरीमधिजालकान्तरमपाङ्गवीचिकाम् ।
ददती श्रुती चतुरदूतिकावचस्यपरा प्रियागमनमभ्यपालयत् ॥ १७ ॥
समुपेहि तूर्णमिति सावलेपता स्वयमस्मि ते पुर इति स्वतन्त्रता ।
निगदामि खेदमिति नैपुणी गिरा न वदाम्युदन्तमिति भावनिह्नवः ॥ १८ ॥
प्रणतिस्तवेति [1]परयाऽभिभाषणं प्रणयः क्व तादृश इति प्रतारणम् ।
कुरु मे प्रसादमिति कोपनिर्णयः क्व सहे व्यथामिति मृदुत्वघोषणा ॥ १९ ॥
कठिनाशयस्तमिति काऽपि [2]गर्हणा दयसे कदेत्युनुमतिर्विलम्बने ।
न हि वेद्मि कृत्यमिति मौग्ध्यनाटिका न जिजीविषेति न कुतो विभीषिका ॥
मयि कोऽपराध इति मा[3]ननाऽऽत्मनो ममता कुतस्तव मयीति कल्पना ।
किमहं वदामि तदिहेति मन्मुखात्कितवं वदेत्यवददेकिका सखीम् ॥ २१ ॥
गदितुं न गद्[4]गदिकया नृशंसतां सुमुखी शशाक सुहृदे मनोभुवः ।
अथवा कथं नु निगदेदपास्तभीरविनाकृतेयममुना सधन्वना ॥ २२ ॥
किमपि प्रियाय गदितुं कृतोद्यमा परमार्थतः पतिमवेत्य भामिनी ।
अनुचिन्तनात्मकमजानती सखीमनुयोगिनीं [5]परुषमैक्षतापरा ॥ २३ ॥
अयि मां विबोधयसि[6] मोहज[7]ल्पितान्यवदस्त्वमेवमवदस्तथेति च ।
कथयामि किं नु सखि कामिनः कृते कथयोचितं त्वमिति काऽप्यभाषत ॥

[1] परया हि हासनम्—छ; परथाभिभासनम्—अ, च, झ; परताभिभावनम्—ज; परिहासभाषणम्—

[2] गर्हिणा—छ.

[3] निनात्मनो—ख, ङ, छ, झ.

[4] दूदकया—छ, ज.

[5] पुरुष—ख, घ, ङ, छ.

[6] य विमोहजल्पितान्य—ख, घ, ङ.

[7] कल्पि—अ.

भवति क्षणं व्यवहिते परीक्षितुं तव [1]कामुकी बत न कामगाद्दशाम् ।
इयतीं क्षमेत किमयं विलम्बनां[2]मिति संदिदेश दयितं प्रतीतरा ॥ २५ ॥
अवलोकयेत्प्रियमनेन संलपेदमुमन्तिकं मम नयेदसाविति ।
अपरा सखीमभिनवामिवादरात्सुचिरं निशा[3]म्य सुहृदे व्यसर्जयत् ॥ २६ ॥
अथ दूतिका हरिणशावचक्षुषामभिवाञ्छितेष्टजनमञ्जसा ययुः ।
अखिलापगान्तरभिपूरणोत्सुकाः पयसां निधिं किल पयोदमालिकाः ॥२७॥
सुमुखीमणेस्सुलभका[4]र्श्यसंपदस्सुषमैव काऽपि सुतरां [5]प्रवर्धते ।
सरितः पयोदसमयावधौ यथा परिहीयमानपयसः प्रसन्नता ॥ २८ ॥
कुसुमेषुणाऽभिह[6]तगुम्फिताश्शरा हृदयस्थिते त्वयि पतेयुरित्यसौ ।
किमु [7]तान्निवारयितुमायतायतं श्वसितानिलं सुवदना विमुञ्चति ॥ २९ ॥
बिसदामनामनि बिलेशयाधिपे कुचहेमभूमिधरशृङ्गसङ्गिनि ।
श्वसितानिलस्सुलभया किमीर्ष्यया परिवृद्धिमेति परिणाहिचक्षुषः ॥ ३० ॥
समुपालभे न हि भवन्तमीदृशं सरसीरुहप्रभवमेव सांप्रतम् ।
अपि विप्रयोगम[8]धिगम्य भाविनं तनुते स्म यत्तदसहं च तद्वपुः ॥ ३१ ॥
इह देहि वीक्षणमितीरिताऽऽलिभिर्न ददाति यद्यपि ददात्यसम्मुखम् ।
यदि सम्मुखं सवयसो न वेत्त्यसौ यदि वेत्ति ता [9]विनिमयेन मोहिता ॥३२॥

[1] कामिनी बत न कामगां दशाम्—घ; मृगीवदनकामुकां दशाम्—ङ; मृगीदृगिह कामगाम्—ज; तव सा मृगी बत कामगदशाम्—छ.

[2] ताम्—छ.

[3] शम्य—क.

[4] कार्यसं—ज.

[5] प्रवर्षते—अ; मवर्धत—ज.

[6] भिमुख—अ, छ.

[7] तान्न्यवारयितुम्—छ.

[8] मवगम्य—अ, क. घ, इ, झ.

[9] विनियमेन—ख.

सरसा[1]र्शयेन्धनविशेषसंश्रयाद्वितरतिस्पृशा विरहवह्निधूम्यया ।
कलुषीकृताक्षियुगलेव सा किरत्यनिवारितप्रसरमश्रुनिर्झरम् ॥ ३३ ॥

कथमप्यसौ कमललोचना मम क्षमते वियोगमिति नावगम्यताम् ।
[2]किमुत श्रुतं किमुत वीक्षितं कुतोऽप्यपहाय मेघमचिरांशुवर्तनम् ॥ ३४ ॥

अनुवादतो गृहशुके प्रकाशयत्यनुरागवद्रहसि मोहजल्पितम् ।
विनताननना विधुमुखी त्रपावशान्नमतीव तन्न पुनरुच्यतामिति ॥ ३५ ॥

श्वसितस्य सौरभमभि[3]प्रधाविनि स्वगुणे क्षणं विरमतीषु वर्षतः ।
[4]मदनस्तदौष्ण्यविनिवर्तिते धनुः पुनराश्रिते प्रहरति प्रियां शरैः ॥ ३६ ॥

[5]कृतमीरितेन बहुना कृशोदरी विकृतिं न किं[6] व्रजति विप्रयोगजाम् ।
अपरेत्यसंशयमवेत्य हंसिकाऽप्यभिवर्धिता न भजते तदन्तिकम् ॥ ३७ ॥

इति दूतिकाहृदयहारिणीगिरा समयोजयत्सहचरं मृगीदृशा ।
प्रियया रथाङ्गमिव [7]भृङ्गझङ्क्रिया मुखरीकृताम्बुजमुखी दिनेन्दिरा ॥३८॥

तरुणे गृहाश्रयिणि तत्कृतां व्यथामवधूय [8]काऽपि समतुष्यदङ्गना ।
शरदं समेयुषि शनैर्बलाहके कलहंसिकेव [9]कलुषीकृताशया ॥ ३९ ॥

अपराधजातमधिरोपयन्तु म-
ध्यबले न किञ्चि[10]दभिमर्शनादिकम् ।

[1] श्योऽपि न विशेषसाश्रयात्—घ, छ, झ.
[2] किमु दृष्टमस्ति किमुत श्रुतं कुतोऽप्यपहाय—क, घ, झ.
[3] प्रपातिनि—घ, ज.
[4] मदतः—छ.
[5] अलमी—छ.
[6] कामयति—घ.
[7] शृङ्ग—घ.
[8] साऽपि—च, छ, ज.
[9] कलुषेतराशया—क, ख, ग, घ, च, ज, झ.
[10] दवमर्शनादिदम्—ख, च, छ, ज, झ ; दविमर्शना—ग, ङ.

अथवाऽस्ति चेदयि नताङ्गि सह्यता-
मितिसान्त्वयन्निव स चाऽऽलिलिङ्ग ताम् ॥ ४० ॥

चरमाङ्गमेत्य सहचारिणाऽपरा पिहितेक्षणा प्रियविनोद[1]वेदिनी ।
त्रपते स्म सा तदभिधानशंसने [2]समसूचयत्पुलक एव तत्क्षणम् ॥ ४१ ॥

प्रहिता परेण परमाणुमध्यमां प्रणयप्रकोपपरतन्त्रमानसाम् ।
अधिगम्य सान्त्वयितुमाशु दूतिका निजगाद वाचमिति नैपुणीयुताम् ॥

मुखमीक्ष्य ते मुकुलितस्मिताङ्कुरं न विभाति कीरवचनेऽपि लालना ।
मसृणो ममापि च समागमादरस्खलितं प्रियेण किमु कातरेक्षणे ॥ ४३ ॥

स्खलितं यदस्ति कमितुर्विदग्धया सहनीयमश्रुतमिव श्रुतं च तत् ।
इति मे न सूक्तिपटिमाऽवगम्यतां नियतं मनोजनिगमार्थनिर्णयः ॥ ४४ ॥

अयि नैव वाञ्छति परामसौ तथाऽप्यसहिष्णुभिः कथितमन्यथा यदि ।
क्व गता मतिस्तव रते [3]ऋते मनो मदनो विनोदयति कामुपेत्य वा ॥

अतिरेकतः प्रणयपूरपूरिता हरिणाक्षि चित्तसरसी तवाऽधुना ।
रमणापराधलहरीनियोजनं क्षमते न किञ्चिदपि कातराऽस्म्यहम् ॥ ४६ ॥

युवयोः परस्परमुपेत्य मेलनं पयसोरिव प्रकटितैकभावयोः ।
अधुना कया वि[4]धुतपक्षपातया कमलाक्षि [5]शंस कलहंसिकायितम् ॥ ४७ ॥

अभिके तवाभिरतिरस्तु वा न वा मम भाषितेऽपि मदनागमस्पृशि ।
न च दृश्यते कथमिदं नवंनवं तनिमानमेयुषि तवात्मनि स्पृहा ॥ ४८ ॥

[1] वादिनी—च.
[2] तम—घ. झ.
[3] विना मनौ—छ ; च ते मनौ—ख, ज.
[4] धूत—ख.
[5] शंसि—क, ग, घ, ङ, च. ज, झ.

न परं [1]तवैव ननु मानविभ्रमः कुटिलभ्रुवां स हि कुलक्रमागतः ।
किमयं निरागसि किमङ्ग सागसि क्रियते कृशाङ्गि कितवे तदुच्यताम् ॥

अयि खेदकृन्न युवयोरमेलनं हृदि खेदहेतुरिदमेव केवलम् ।
तमिमं विहाय तव रूपमीदृशं वनजाक्षि येन वनचन्द्रिकायते ॥ ५० ॥

न विमुच्यते त्वयि नतभ्रुसायकः किमु तद्व्यथैककृतिना सुमेषुणा ।
अपि मुक्त एष [2]कुरुते न किं व्यथामतिसौकुमार्यचिरसौहृदात्तनोः ॥ ५१ ॥

कुटिलाक्षि शोधयितुमेव मे मनः क नु शिक्षिता सुहृदि कोपनाटिका ।
शयने कदाचन कदाचिदासने हृदि चैकदा त्वमसि यद्विचिन्तिता ॥ ५२ ॥

यदि [3]शङ्कसे मयि कलङ्कमीक्ष्[4]यतामिति कामिनैव हृदयं प्रवेशिता ।
न निवर्तसे[5] पुनर[6]तो निरागसः कमितुः पुरो भवितुमेव कातरा ॥ ५३ ॥

युवयोस्स्मरेण युगपत्प्रयोजितं सहते न ते सहचरश्शरोत्करम् ।
क्षमसे [7]त्वमाशयमलीढ नैष किं स्तनशैलयोः प्रतिहतस्तलोदरी ॥ ५४ ॥

विरहानलेन विटमानसं यथा हृदयं तवाऽपि [8]परिताप्यते तथा ।
युवयोर्न किं नु युगप[9]द्विमेलना सुलभा भवेत्सुरभिबाणशिल्पिनः ॥ ५५ ॥

समुदीर्य सूक्तिभिर[10]तीव दूतिका समयोजयत्सहचरेण मानिनीम् ।
कृपणां चिराय कमलेव वार्षिकी स्तनितो[11]ञ्चिता तटवतीमुदन्वता ॥ ५६ ॥

[1] वैनमनुमान—ख.
[2] तनुते—क.
[3] चिन्त्यसे—ङ.
[4] क्षताम्--छ.
[5] ते—ग, छ.
[6] रितो—छ.
[7] त्वदाशय—च, छ, ज, झ.
[8] यदि ता—अ, ग, घ, ङ, च, छ, ज, झ.
[9] प्रमेलना—छ.
[10] विदतीव—छ.
[11] माञ्चिता—छ, झ.

अथ मानिनीरजहिमं समं प्रियैरनुरागपावकशिखाज्यमूर्जितम् ।
मदवारिमन्मथमदावलेशितुर्मधु पांतुमैहत मनस्विनीजनः ॥ ५७ ॥

मधुपारणे विरचितं मृगीदृशा मुहुरेतदीयनुतिमौलिकम्पनम् ।
मधुघूर्णितं[1]स्य महतो भविष्यतः प्रथमावतारपदवीम[2]वीवृधत् ॥ ५८ ॥

अधिवासशालि मधु योषिता(दा)शयं विशदेव दूषितविवेकवर्तनम् ।
निखिलं निगूहनवचो बहिस्स्वयं निरकासयत्किमु निवासकाङ्क्षया ॥ ५९ ॥

मदिरेक्षणामुखधृतं मुदेऽभवच्छषकाश्रितं सहचरस्य नो मधु ।
सलिलं [3]घनालिचुलकीकृतोज्झितं स्वदते हि नैव लवणार्णवस्थितम् ॥ ६० ॥

दयिताजनस्य दृढमानकर्कशे मृदुतावहं मधु मनोविधूपले ।
अनिदानहासमयकौमुदीं दिशन्निववार सोदरतया विधोर्गुणम् ॥ ६१ ॥

अखिलं रहस्यमवदज्जनाग्रतो मदपारवश्यमधिगम्य मानिनी ।
अलसालसालपितवर्णसन्ततेरनतिस्फुटत्वमवतिस्म तत्पुनः ॥ ६२ ॥

अपदे मदेन हसितं च रोदनं प्रतिबिम्बनेषु बहुधाऽवलम्बनम् ।
अनभिज्ञता परिचितेष्वभिज्ञता विदितेतरेषु विललास सुभ्रुवः ॥ ६३ ॥

वदने तथा मनसि रागविभ्रमस्खलनं पदेऽपि च मदेन भाषिते ।
अधिलोचनद्वयमपि भ्रमो[4] मतौ शुशुभे विभक्तमिव सुभ्रुवोऽखिलम् ॥ ६४ ॥

महिलाजनस्य मदिरानिषेवणात्कृतवीरपाननटनस्य कामिभिः ।
प्रणयोल्लसत्पुलकवर्मिताकृतेर्मदनाहवाभिलषितं मनोऽभवत् ॥ ६५ ॥

[1] र्णनस्य—क, ख, च, छ, ज, झ.
[2] वीव्यथात्—छ.
[3] वनालि—छ.
[4] भ्रमे म—छ.

सुदृशो विधूय बहुशो निवारणं प्रणयेन मोचयति कञ्चुलीं प्रिये ।
लघुसङ्कुचत्तनुलतैव लज्जया पुनरप्यसौ पुलककञ्चुकीमधात् ॥ ६६ ॥

अयि किं बिभेषि भवदन्तिके सखी निवसत्यसौ निपुणमीक्ष्यतामिति ।
अदसीयबिम्बमधिरत्नभित्तिगं परिसूच्य[1] तां पतिररुन्ध गत्वरीम् ॥ ६७ ॥

अयि मार्ज्यते लगति चेदपाङ्ग इत्यवमार्जयन्निव तदङ्गमस्पृशत् ।
अतिदीनमर्हति न गाढबन्धनान्यवलग्नमित्यहरदंशुकाञ्चलम् ॥ ६८ ॥

अधरं गृहीतवति कामुके हठादतनोत्कुचावरणमात्तसम्भ्रमा ।
अलघुस्तनस्पृशि ततो नवा वधूरवति स्म नीविमवलम्ब्य पाणिना ॥ ६९ ॥

भुजवल्लरीं द्विगुणितामुरोजयोः परिधानवाससि परं कराञ्चलम् ।
दृशमर्पयन्त्यपि च दीपिकार्चिषि प्रमदा निरैक्षि गमिता प्रियान्तिकम् ॥७०॥

दयिते करस्पृशि दरानुरागयोस्सममैक्षि कम्पपुलकश्रमोदकम् ।
अधरं हठात्कृतवति[2] त्रपामुदोरसितभ्रुवस्सदृशमक्षिमीलनम् ॥ ७१ ॥

सविधं प्रियस्य गमिता सखीजनैर्विनतानना विधुमुखी त्रपावशात् ।
प्रतिबिम्बभाजि पतके च सा दृशौ निमिमील तां निभृतमाश्लिषद्विटः ॥७२॥

अपदिश्य किञ्चन सखीषु गत्वरीष्वदवीयसि प्रियतमे तमोमुषि ।
अपि दीपिकार्चिषि मुहुस्सतर्जनं सभयं सरोषमभवत्तदीक्षणम् ॥ ७३ ॥

प्रणयोत्तरं किमपि पृच्छति प्रिये न परं ददे प्रतिवचो नवोढया ।
अथ दत्तमप्यगमि न श्रवःपदं[3] गमितं तदप्यजनि न स्फुटीकृतम् ॥ ७४ ॥

[1] परिमुच्य तां—ख, ग, घ, ङ.
[2] धृतवति—ञ.
[3] पथं—ख, ग, घ, छ.

अवलम्ब्य रोमलतिकामवातरत्कुटिलभ्रुवः कुचमहीधरादयम् ।
अथ नाभिमण्डलसुरङ्गमाविशन्नभिकस्य[1] पाणिरथ नीविमग्रहीत् ॥ ७५ ।

कबरीकलापतमसा विसारिणा कबलीकृते सति मुखक्षपाकरे ।
प्रमदोत्तराविव पयोधराभिधौ रमणीमणेः रथपदावनृत्यताम् ॥ ७६ ॥

शयपल्लवस्सहचरस्य साहसादहृतोत्तरीयमथ तन्निवारणे ।
सुदृशः कराग्रवलयेन चुक्रुशे स्तनदुर्गमेष गमितस्तदाऽमुना ॥ ७७ ॥

नवमेखलानिनदनाभ्युदञ्चनं कुचशीर्णहारकुसुमाञ्जलिश्रियः ।
स्फुटबन्धभेदबहुभूमिकाविटैस्सुदृशो बभुः सुरतलास्यविभ्रमे ॥ ७८ ॥

सहमृगनयनाभिस्तत्र संक्रीडमान-
स्शशिधवलविताने सागरस्योपकण्ठे ।
पतिरिव कमलायाः पाथसि क्षीरसिन्धो-
श्शयनमयमयासीच्छासिताऽपि क्षमायाः ॥ ७९ ॥

इति[2] राजनाथस्य[3] कृतावच्युतरायाभ्युदय[4]नाम्नि महाकाव्ये नवमस्सर्गः

[1] न हि कस्य—अ, छ.
[2] इत्यच्युत—छ.
[3] थकृता—क, ख, च, झ.
[4] दये न—क, ख, च, छ, झ.

# दशमस्सर्गः

कक्ष्यान्तरेऽथ मगधाः करजाग्रयोगाद्व्यक्तीकृतश्रुतिसुखां[1] विरचय्य वीणाम् ।
नाथं भुवो भणितिभिर्नयजागरूकं प्राबोधयन्दिनमुखस्तुतिपक्ष्मलाभिः ॥ १ ॥

आस्वाद्य पूर्वमविशङ्कमभीशुमिन्दोराराद्विरामसमये [2]कणशो गृहीतम् ।
चञ्चूपुटेषु कलयन्ति चकोरकान्ताः सञ्चिन्त्य शावककुलानि तृषाऽऽकुलानि ॥

सायम्मिलद्दलशताक्रमणाद्द्विरेफस्संरक्षितुं सहचरीं वितती चिराय ।
सङ्कोचयत्यतिजडौ गरुतौ[3] कथञ्चित्सांहासिकस्पृशि शनैर्मुकुले[4] नलिन्याः ॥

कारानिभात्कमलकुड्मलतश्चिराय
निर्गत्य षट्पदयुवा कुमुदे न्यवात्सीत् ।
तत्राऽपि [5]सङ्कुचदुदश्च्छदपीडितोऽभू-
त्कुत्राऽपि भावि न जहात्यसुखं सुखं वा ॥ ४ ॥

ज्योत्स्नाम्बुपूरमपसार्य दिशावकाशकूलङ्कषं कुवलयाक्रमणानुकूलम् ।
ध्वान्तौघमु[6]द्धरखरांशुखनित्रपातान्विस्तारयत्यरुण एष वियत्तटाकम् ॥ ५ ॥

[1] धां वि—अ, क, ग, च.
[2] कणिशं गृ—च, ज.
[3] तौ स किञ्चित्—छ.
[4] लैः न—छ.
[5] सङ्कुचितत्च्छदपी—छ.
[6] निर्भर—अ; कर्दमहरांशुखनित्रपातो—छ; मृद्गरहरांशु—ज; मृद्गर—झ.

पादाग्रतः कमलिनी [1]परिदृश्यमाना [2]प्रादुस्मिताऽम्बुजमिषात्प्रथमं प्रबुद्धा ।
पत्युर्निजस्य परिपालयतीव बोधं पन्था ह्ययं परिचितः पतिदेवताभिः ॥ ६ ॥

आलोक्य [3]दूरमितरेतरमश्रुयोगादग्रेऽपि मार्गमवगन्तुमपारयन्तौ ।
पश्चात्परस्परवानुगमादूभ्रमन्तौ संरम्भतो रथपदौ दिवसं घटेते ॥ ७ ॥

व्यग्रास्समीहितफलाय विधाय [4]दृष्टिं व्या[5]प्तारुणद्युतिनि विष्णुपदेऽनुवेलम् ।
विद्योतयन्ति विविधागमशाखिकायामुच्चैस्स्वरप्रकरणान्[6]युदये द्विजौघाः ॥ ८ ॥

आश्लेषविच्युति[7]संहानवकल्प्य मुग्धान् जग्धावशिष्टकणिशार्पणतः किशोरान् ।
क्वापि क्रमोपचितकूजनधोरणीका निर्यान्त्यतश्शकुनयस्तरुनिष्कुटान्तात् ॥९॥

अर्घ्योदकानि महसामधिपाय दातुमाबिभ्रतोऽञ्जलिपुटेष्वखिलान्द्विजातीन् ।
अम्भोजिनीपरिषदः किमिहानुकुर्वन्त्यन्तर्मरन्दरसदन्तुरितारविन्दाः ॥ १० ॥

विस्तार्यमाणमरविन्दकरन्नलिन्या विप्रश्निका समवलोक्य नि[8]शान्तवेला ।
सन्ध्यांशुदण्डमधिशक्रदिशं प्रचाल्य प्राह प्रियागमशु[9]भं पततां विरावैः ॥११॥

अन्तेवसन्तमप[10]सारितपाशबन्धं वत्सं कटाक्षिततनौ सुरभौ नियोज्य ।
गोपालकोऽयममृतं गुरु[11]मप्रमेयमापीडितो मिषदधस्तनजन्म दुग्धे ॥ १२ ॥

इन्दीवराण्युद[12]यतीशितरि ग्रहाणां निद्रान्ति यन्नियतमभ्युदयान्यमूनि ।
इत्यव ताान पारहत्य वलान्त मन्दामान्दान्दराद्विजकुलान्यरावन्दबृन्द ॥१३।

[1] परिमृश्यमाना—ज.
[2] दुत्थिताम्बु—छ.
[3] योगमि—अ.
[4] वृष्टिं—च, छ.
[5] प्तानल—च, छ.
[6] न्युभये—अ.
[7] सुखानव—च, छ; ज.
[8] हि वेला—छ; विभातवेला—ऋ
[9] मुदं—ख, ऋ.
[10] वसारि—छ.
[11] रुप्र—छ.
[12] दयदिक् प्रथमे—क.

सन्ध्याच्छलेन मुखमार्जनवस्त्रमाशासौत्रामणी वरुणदिक्च्छशिमण्डलाग्रम् ।
अभ्रश्रियैव विजिहीषति भानुमालिन्यम्भोजिनी वहति चाब्जमयीं कलाचीम् ॥

मन्देहलोकमखिलं मथितुं पयोधेर्निर्गच्छतश्शुभनिरीक्षणकालजन्मा ।
निश्वासबन्ध इव नीरजलोकबन्धोः प्राभातिको विवलते पवनस्तुषारः ॥१५॥

सम्प्रेष्य हेतिसमवायमहर्मुखेन सन्दा[1]रितान्धतमसः प्रसरं समन्तात् ।
पाथोजिनीः किमखिलाः परिणीय दूरात्प्रख्यायते पतिरसाविति भानुरासाम् ॥

निक्षिप्तमात्मनि सुरक्षितमाप्रभातं पूष्णे वसूच्चयमयी पुनरर्पयित्वा ।
दीपास्सजाड्यमवपत्य दशांशुकान्ते निद्रान्ति सङ्कुचदभीशुनिभप्रतीकाः ॥

आभोगवत्प्रथमशैलकुचाग्रलीनमाकृष्य चन्द्रकिरणांशुकमब्जबन्धौ ।
आश्लिष्यति स्वमचिरेण हरिद्वलारेरालक्ष्यते सुखनिमीलिततारकेय[2]म् ॥ १८ ॥

निर्गच्छतो निखिलसन्तमसं नियन्तुं[3] नेतुस्त्विषां त्रिभुवनाऽनुजिघृक्षयाऽग्रे ।
स्थातुं न युक्तमसहायतयेति कुत्राप्यन्तर्दधाति रभसादधिभूर्द्विजानाम् ॥१९॥

आकर्ण्य कर्णमधुरामिति मागधोक्तिं कान्तो भुवः परिसमापितकाल्यकर्मा ।
प्रातिष्ठताऽस्तपवमानजवाभिमानमारुह्य वाहमपरोक्षिततार्क्ष्यवाहः ॥ २० ॥

कक्ष्यान्तरेषु कलितस्थितिभिः पुरैव कालानुकूलपरिकर्मकरम्बिताङ्गैः ।
आरूढवाहनिवहैरनुबद्धरागं नाथोऽन्वगामि धरणेर्नरपालवर्गैः ॥ २१ ॥

निर्भर्त्स्यमानकुलिशारभटीनिरूढिं निस्साणराणमिव सोढुमशक्नुवानः ।
आवर्तकर्णविवरा[4]र्पितफेनकूलं[5]मालोक्यते किमपरं पतिरापगानाम् ॥ २२ ॥

[1] न्दर्शिता—छ.
[2] कोयम्—च.
[3] न्तुः—झ.
[4] वराचित—ज.
[5] लामा—झ.

निर्गच्छतां कलकलैर्निबिडं भटानां निर्याणतूर्यजनुषा निनदारभट्या ।
गन्धर्वहेषितरवैर्गजगर्जितैश्च सर्गो विधेरजनि शब्दमयः किलैषः ॥ २३ ॥

सम्भ्राम्यतोपकरणग्रहणे समन्तात्
प्राक्प्रेषिताखिलपदार्थनिराकुलेन ।
विक्षिप्य वस्तु चलितेन विना सहायं
तद्ग्राहिणाऽजनि जवेन तदाऽपरेण ॥ २४ ॥

अग्रे दृशोर्विदधतीव जगत्त्रयैक्यमाक्रम्य सर्वमवनीतलमप्यमान्ती ।
आलक्ष्यतः क्षितिधराक्रमणापदेशाद्राशीकृतेव वसुधारमणस्य सेना ॥ २५ ॥

आशास्वहंप्रथमिकोल्लसितैरनीकिन्यश्वीयपांसुभिरगादनवेक्ष्यमाणा ।
आशङ्क्य धावनमरातिमहीपतीनामाबिभ्रतीव महतीयमदृश्यविद्याम् ॥ २६ ॥

आस्वाद्य तोयमधिवर्त्म जनानजस्रं
छायालभूमिषु निषद्य निषद्य यातान् ।
आशान्त[2]दिग्गजमदाम्बुविलम्बिनिर्य-
दाराद्धजाटविषु सैन्यरजोऽन्वकार्षीत् ॥ २७ ॥

एतत्प्रयातु बलमेतदपि[3] प्रयायादित्येव करिश्चदपथे[4] सुचिरं न्यवात्सीत् ।
आगच्छदेतदधिकं न खलु व्यरंसीदस्यैव किन्तु विरलं पथि[5] गन्तुमाशा ॥ २८ ॥

सम्मर्दतः पथि चमूरिशथिला समन्तात्संवर्तसिन्धुसमसन्नहना व्रजन्ती ।
आविर्मिथः कलकलारवमन्तरालेऽप्याद्यन्तयोस्तटवती महतीरतारीत् ॥ २९ ॥

[1] भ्राजितो—छ.
[2] चान्त—क, च.
[3] तदिति प्र—अ, छ.
[4] थेषु चि—अ, छ.
[5] थिकं दुराशा—छ.

आबुद्ध्य तथ्यमिति कूटकृतं भटानामायोधनं सुवदनाऽऽश्लिषदात्मनाथम् ।
तत्त्वं तदात्व[1]जनितं स जनोऽपदिश्य तां वारयन्निव भयात्तरसाऽऽलिलिङ्ग ॥३०॥

आरोपिता तुरगमाशु नियम्य कण्ठमाबध्नती सवलयेन भुजेन काचित् ।
नाथेऽङ्गभारमतनिष्ट नतभ्रुवोऽस्या वाहाधिरो[2]हणमजायत वैभवाय[3] ॥ ३१ ॥

दाशेरकत्वरितदर्शनतो महोक्ष-
मुत्प्लुत्य यान्तमनुयातुमुदग्रवेगम् ।
स्रस्तां विहातुमप[4]टुस्सरणौ च गोणी-
म्मध्ये त्रिशङ्कुरिव कोऽपि वणिग्बभूव ॥ ३२ ॥

कश्चिद्धयेन सह कापथधावितेन गाढं निपत्य भुवि नाऽव्यथताऽऽहतोपि ।
सोऽयं गतानुगतिकाखिललोकहा[5]सकोलाहलैरहह कोरकितव्यथोऽभूत् ॥ ३३ ॥

[6]सम्बोधतो विशिथिलं जरती स्ववर्ग्यानाख्यानपूर्वकमनुक्ष[7]णमाह्वयन्ती ।
विष्वक्[8]कथाऽनुवदतो जगतो विनोदात्प्रीत्यै कटूक्तिमुखराऽप्यभवन्महत्यै ॥३४॥

अन्यश्चमूनिबिडितानविषह्य मार्गान्मार्गान्तरं समनुगन्तुमनाश्चचाल ।
तत्रावकाशमनवाप्य तथा विमर्दा[9]त्कुण्ठक्रमोऽजनि कुतो गतिर[10]स्थिराणाम् ॥

संरम्भतस्सरयमुत्पतिताश्चमूनां स्थातुं जनैरविरतास्वटवीष्वशक्ताः ।
श्रान्ताश्चिराय दिवि च भ्रमितुं शकुन्ता वेतण्डकेतुषु विशश्रमुरुच्छिखेषु ॥

[1] तु जनि—छ.

[2] धिरोपण—ख.

[3] From verse 32 to verse 48 the text is missing in manuscript ज.

[4] पटः—छ.

[5] भास—ख.

[6] संबाधतो—अ, च, छ, झ.

[7] भावहन्ती—झ.

[8] कुकुदानुवद—अ, झ.

[9] कण्ठक—क, घ.

[10] रस्खलानाम्—छ.

कश्चिच्छशः कलकलाकुलमेव लोकैराबद्धचक्र[1]मभितोऽप्यनुधाव्य[2]मानः ।
सम्बाधवद्गजहयाङ्घ्रिचयान्तरालं सद्यः प्रविश्य चतुरक्रममभ्यधावत् ॥ ३७ ॥

आच्छिद्य कङ्कणनियन्त्रितमङ्घ्रिसूत्रं यातः क्व वा शुक इतीह[3] कयाचिदूचे ।
जाने शुकं जहिहि खेदमपाशमास्ते ब्रह्मण्यसाविति बभाण सलीलमेकः ॥

यानेन सञ्चरणमूरुयुगेन शुण्डां कुम्भं मिथो मिलितयोः कुचयोर्युगेन ।
स्वैरं यतो विजयसे सुतनो करेणोरारोहणं[4] तदिदमौपयिकं भवत्याः ॥ ३९ ॥

कान्तोपगूढचरमाङ्गतया गजस्य स्कन्धे भवस्य पितुरङ्गतनौ निषण्णः ।
एतन्न पश्यति ममोपरि पातुकोऽश्वः पश्येज्जनः किमिव पञ्चशिलीमुखान्धः ॥

पश्चाद्गतस्य महतः पथि नाऽवकाशं लोकस्य दत्त पुरतो निबिडं प्रयात ।
दत्वा बलिस्स हरये त्रितयं पदानां यत्सौख्यमाप तदिदं विदितन्न किं वा ॥

आलिसमूधसि गवांकुलमध्वपङ्कैः किं वा कृथाः कृपण तर्णकवक्त्रबन्धम् ।
शाखां[5] प्रगृह्य पुरतस्त्यजसि प्रतूर्णं शाखामृगस्य क इवासि सचापलस्त्वम् ॥

जम्बालमग्नचरणे शकटे चिराय निष्पन्दमध्वनि निरीक्ष्य रुषा[6] महोक्षम् ।
आहन्ति कोपि कशया स पुनर्युगान्ते हन्ता हतो निजशिरःप्रसृता[7]ग्रकायः ॥

आलापभङ्गिभिरतीव तरङ्गिताभिरज्ञातदूरगमनार्तिरनीकिनीयम् ।
नासीरसीम्नि चलिता नरपालमौलेराशामपूरयत पाशधराधिनाथाम् ॥ ४४ ॥

कल्लोलजालशिशिरेण[8] **कवेरजायाः** कूलाध्वनैव परिलङ्घ्य स **कोङ्कदेशान्** ।

[1] वक्र—अ ; मार्ग is also noted as a variant for चक्र in झ.

[2] प्यभिधाव्य—ख.

[3] तीव—अ, ग, घ, छ.

[4] रोपणं—छ.

[5] खाः प्र—क.

[6] रुजा—छ.

[7] प्रहृताग्र—छ.

[8] शिखरेण—अ, छ.

**श्रीरङ्गपट्टण**(पत्तन)मगाज्जयसिन्धुकन्यानाट्यक्रियासमुचितं [1]तरसाऽवनीन्दुः ॥

तन्निर्गतस्तदनु तौलवभूमिपालैरादाय दत्तमनियत्ततया स वित्तम् ।
आशां कुबेरभरितामवगाहमानः प्रायात्सपादमभिपालयिता धरायाः ॥४६॥

निखिलफणाधरेन्द्रनयनान्ध्यनिबन्धनकृ-
त्प्रतिभयतूर्यभाङ्कृतिविदीर्यदहार्यतटः ।
पतिरवनेः क्रमेण परिलङ्घ्य निजान्विषयान्
**हयपति**रक्षितां क्षितिमगादरिशिक्षयिता ॥ ४७ ॥

**इति[2] राजनाथ[3]स्य कृतौ अच्युतरायाभ्युदये[4] महाकाव्ये दशमस्सर्गः**

[1] नरसावनीन्दोः—क ; नरसात्मजन्मा or नरसावनीन्दुः—झ.
[2] इत्यच्युत—अ.
[3] थकृ—क.
[4] ये दश—अ. क, ख, छ ; य नाम्नि महा—ग, घ.

# एकादशस्सर्गः

उत्क्षिप्य क्षितिकुहरादुपात्तनृत्तैर्निक्षिप्तं स्वयमिव [1]निह्नुतं पदार्थम् ।
आलो[2]क्य क्षितिपमणेरथायुधीयैराक्रान्तं **हयपति**राज्यमन्यभोज्यम् ॥ १ ॥

प्राकारान्तरनि[3]भृतान् क्षितीशसेना पाश्चात्यानथ परिवारयाम्बभूव ।
अर्यम्णो हरिति तथा यथांशुधोरण्यद्रीन्द्रावटतटगूढमन्धकारम् ॥ २ ॥

संव[4]र्ता्र्णवसलिलेन वा परीतं प्रज्वालानलपरिवारितं यथैव ।
तत्सेनावलयितमैक्षि दण्डपाणेः पाशेनाऽऽवृतमिव **पारसीक**सैन्यम् ॥ ३ ॥

पर्यायात्प्रतिभटदारुयन्त्रमुक्तैः पाषाणैरपि लगुडैः परश्वथैश्च ।
सक्रोधं तदुभयसैन्यमण्डलानां सङ्ग्रामस्समजनि साधुवादपूर्वम् ॥ ४ ॥

[5]यन्त्राश्मप्रतिभयवर्षजेन्द्रगोपैरुद्धूमप्रसरतमस्तमोमणीभिः ।
अद्रीन्द्रस्तदभिहतिक्रियास्फुलिङ्गैराचष्टोद्यतमवनीशरागमन्तः ॥ ५ ॥

अज्ञाताशनिपतनादि[6]शासु लीलां कुर्वन्तः किल कुलभूभृतां कुमाराः ।
गम्भीरध्वनिलघुलोहनालकीर्णा ग्रावाणो गगनविगाहिनो निपेतुः ॥ ६ ॥

[1] निस्तुतम्—अ, घ. [2] कि क्षि—अ, क.
[3] निरतान्—ख, छ. [4] र्ताम्बुधिस—ज.
[5] इन्द्राश्म—छ. [6] दिपुञ्जलीलाम्—ख; दिशाति लीलाम्—अ

यन्त्राश्माहतिपतितानि यान्यभूवन् तान्युच्चैर्वरणशिरांसि[1] तत्क्षणेन ।
उद्धूतान्युपलमृदर्पणेन रामच्छिन्नोद्यद्दशमुखशीर्षधोरणीव ॥ ७ ॥

योधाः केचन युयुधुर्नृपालमौलेः प्राकारं क्वचिदितरेऽखनन्खनित्रैः ।
आरुह्य द्रुतमपरेऽपतञ्छकानामौन्नत्येन च सममायुषा निमेषात् ॥ ८ ॥

पाषाणैः फणिमुखतोऽपि सिन्धुरेन्द्रैः[2] प्राकारं नृपसुभटेषु पातयित्वा ।
आविश्याहतविमतेषु ते बलानामध्यक्षं द्रुतमनमन्हताविशिष्टाः ॥ ९ ॥

निर्याते मलुकनिबर्हणाय[3] तस्मिन्पारीन्द्रप्रतिभयविक्रमे प्रतीच्याम् ।
साशङ्कस्समजनि शाङ्करस्सखापि प्रादुष्यात्क खलु जिजीविषा परेषाम् ॥ १० ॥

आलीढाम्बरमपदिश्य धूमजालं[4] निर्गच्छत्सगरनिवासदुष्कृतानि ।
भुञ्जानैर्बलनिहितेन बर्हिषाऽऽपुः विद्वेषिक्षितिपपुराण्यहो विशुद्धिम् ॥ ११ ॥

किं वाऽयं तव पतिरेष वा किमु स्यादित्येतैररिनगरात्क्रमेण[5] योधैः ।
धृत्वाऽग्रे यवनशिरांसि दर्शयद्भिः कारुण्यं शककमलेक्षणास्वनाटि[6] ॥ १२ ॥

प्रज्वालो बलनिहितः प्रतीपपुर्याः प्रासादोपरि परिजृम्भतेऽस्य वह्निः ।
व्यालीनान्दिशिदिशि वीक्षितुं विपक्षानुद्ग्रीवो मनुजपतेरिव प्रतापः ॥ १३ ॥

साहंपूर्विकनृपसैन्ययोधवीरैरानीतं[7] परिभवमाकलय्य सीम्नः ।
[8]विभ्रश्यद्धृतिवरणो विलुण्ठितात्मा वाहेन्द्रः प्रतिघवशंवदो दिदीपे ॥ १४ ॥

[1] पूरण—छ.
[2] रैन्द्रैः—घ.
[3] बन्धनाय—is an alternative reading also found in अ.
[4] मालाग्नि—छ.
[5] षु यो—क, ख, ग ; मणेषु यो—छ.
[6] कुटिलेक्षणास्व—छ.
[7] पूर्वक—क.
[8] संविभ्रद्धृ—अ, ख, घ, ङ.

अक्षीणं दृगरुणिमानमव्यवस्थामुत्थानस्थितिषु[1] [2]तथोत्तमाङ्गकम्पम् ।
वासो विच्युतिमवकल्प्य वाहनेतुर्मैरेयान्तरमजनिष्ट मन्युरेव ॥ १५ ॥
क्रोधाग्नौ हृदि निहितोदये शकेन्दोर्निश्वासप्रसरणसम्पदो[3] निदाने ।
वायोरभ्युदयपुषश्चिराय वह्निः प्रायः प्रत्युपकरणाय पर्यणंसीत् ॥ १६ ॥
हस्तेनाऽऽहतमुहुरंसलन्निजांसं प्रभ्रश्यन्मणिमयपारिहार्यमेषः ।
आशङ्कय स्वयमनुरागिणीं नरेन्द्रे क्षेपीयः क्षितिमिव शिक्षयन्भुजस्थाम् ॥ १७ ॥
आबद्धभ्रुकुटिरयं वितानमालामामृद्नन्[4]मृधमवगम्य पिष्टपाणिः ।
हुङ्कारैरुपजनयञ्जनस्यभीतिं वाहेन्द्रस्समगतवान्[5]नरेन्द्ररीत्या ॥ १८ ॥
अभ्येत्य प्रतिघमधीश्वरश्शकानां श्मश्रूणाञ्चयमुदलुञ्चयच्छयेन ।
पुंस्त्वे तु[6] प्रभुरयमात्तपौरुषस्स्यात्पुंभावाङ्कनमिदमित्यवेत्य नूनम् ॥ १९ ॥
आतन्वन्नयमयथातथं यथावत्कुर्वाणः किल कुरुविन्दपारिहार्यम् ।
[7]सन्दष्टोदरपरिकम्प्यमानमौलिस्सक्रोधारभटिस्सभासदो न्यगादीत् ॥ २० ॥
प्राचीनान् परिभवता कृतोऽस्य पित्रा कालान्मे कथमपि कल्पितप्रमीलः ।
यः सुप्तः किल हृदयेऽभियाति वाहिन्यारावैस्त्वरितमजागरीत्सरोषः ॥ २१ ॥
गीर्वाणावसथगिरेर्गरीयसस्स्याच्चाञ्चल्यं यदि सहकृत्वना कृशानोः ।
सङ्क्षोभश्शकधरणीशितुस्तदा स्यात्सङ्ग्रामे चतुरिमशालिना परेण ॥ २२ ॥

[1] From here there is a gap in छ and the text is resumed in verse 31.

[2] नवोत्त—च.
[3] दा—च.
[4] वृषमधिगम्य दष्टपाणिः—च.
[5] वानरीयरीत्या—क, ग, घ, च.
[6] स प्रभु—क.
[7] दष्टोष्ठोदर—च.

इत्युक्त्वा परिषदमीशिता हयानां [1]रायच्छूराह्वयपुररक्षणाय योधान् ।
प्रस्थाप्याऽऽहवकृतिनः प्ररूढरागान् संजज्ञे स्वयमपि सावधानचेताः ॥२३॥
[2]सक्ष्वेळारभटीचमूभटो नगर्याः निर्यातः पटहनिनादनिह्नुताशः ।
दुर्वारा यवनबलस्य धूलिरग्रे नेत्राणां निपुण[3]सुहारिणी चचाल ॥ २४ ॥
आयान्ती स्वयमवनीव यावनीयं मर्त्यानां पतिमभि(मति)मांसलानुरागा ।
संरम्भात्सह वलतो बलैश्शकेन्दोरायासीदभिमुखमञ्जसा समीरः ॥ २५ ॥
अभ्येतुं जिगमिषुमै(षयै)क्यतः प्ररूढादौत्सुक्यादसुपवनङ्किलादसीयम् ।
पन्थानं कमपि विलङ्घ्य **पारसीकक्षोणीशः** कृतवसतिः क्वचित्प्रदेशे ॥२६॥
मर्त्येन्दो[4]रतिबलसिन्धुवाहिनीं स्वामत्याक्षीदयमपुनर्निवर्तनाय ।
चातुर्याच्चटुलमृगेन्द्रशातदंष्ट्रापर्यङ्कस्वपनपराङ्मुखान्तरात्मा ॥ २७ ॥
शार्दूलैरपि समशीर्षकान्धुनानास्साधर्म्यं (यवन) शकनृभटैश्च संदधानाः ।
पाथोधीनपि च तरीन्विना तरीतुं पारीणाः पविपतनं च सोढुमीशाः ॥ २८ ॥
आयान्तीमथ यवनावनीशसेनां निष्णाता युधि रुरुधुर्नृपायुधीयाः ।
[5]चर्मान्तप्रतिकलसङ्कुचच्छरीरास्सन्दश्याननचरणाः क्षणं तदग्रे[6] ॥ २९ ॥
सङ्गोप्याखिलमपि चर्मणि स्वमङ्गं सन्दश्य स्फुटचरणा नराः क्षणेन ।
साटोपं कतिचन खेटिकाश्शकारेस्सञ्चेरुः कमठसरीतयो रणाब्धौ ॥ ३० ॥
निस्त्रिंशैर्नृपतिचमूभटा निहन्तुं रक्षांसि ग्रसितुमिमांश्च मांसलोभात् ।

[1] राचू—ज.

[2] This half is omitted here and put as the second half of *v*. 27—च; Verse 24 is given as *v*. 27 in ज.

[3] निपुणिमहा—च.

[4] रथ ब—क.

[5] शमन—अ.

[6] This half is omitted in ख.

वामाक्ष्यो बलै[1]परिमंथिनो वरीतुं संरम्भात्समसमयं शकान्विभेजुः ॥ ३१ ॥

वाहिन्योरभिमुखमञ्जसा चलन्त्योर्दुर्वारे प्रसरति धूलिका[2]निकाये ।

भूतानि ध्रुवमितराणि[3] भूतधात्र्याः [4]सायुज्यं किमपि दधुश्चतुर्विधानि ॥ ३२ ॥

वर्षन्तावभिमुखमेव वारिधारां[5]पाथोदाविव पवमानतः [6]प्रणुन्नौ ।

प्रत्यग्रप्रहरणवर्षदुष्प्रधर्षौ सामर्षौ परिमिलितस्वसैन्यवर्गौ[7] ॥ ३३ ॥

व्यग्रासिव्यतिहतवीरजातमूर्च्छाप्रत्यूहामरपरिषत्प्रसूनवर्षम्[8] ।

आर्द्रासृक्तुमुलनिषद्वरावसीदत्पादातोद्दलनपराङ्मुखायुधीयम् ॥ ३४ ॥

आलम्ब्यायतपृथुशुण्डयाऽङ्घ्रिकाण्डे वेतण्डोद्धृतनरविप्लुताजिशौण्डम् ।

तद्दूरोपरि परिनुन्नमुण्डषण्ढं प्रक्षुभ्यद्वरवरणापतत्सुरीकम् ॥ ३५ ॥

[9]आनृत्यत्तुरगखुराभिघातहस्तिव्यत्यासाहतिरणसुप्तवीरवर्गम् ।

अस्त्रौघैरपि च निवारितास्त्रमासीदन्योन्यं नृपशकसैन्ययोरनीकम् ॥ ३६ ॥

व्यात्तास्यो वलयितकार्मुकापदेशात् व्यावृण्वन्विशिखमिषेण तीक्ष्णदंष्ट्राम् ।

संहर्ता लघुसमरान्तको भटानां विस्फारैरजनि विकस्वराट्टहासः ॥ ३७ ॥

निस्त्रिंशव्यतिहननस्फुलिङ्गदीपैर्निर्यद्भिर्निबिडचमूपरागधूमैः ।

दुर्वारैरपि शरतोरणै रणोर्व्वी वीरश्रीसुभटविवाहवेदिकासीत् ॥ ३८ ॥

[1] पन्थिनो—ग, घ.
[2] कारिकाये—छ.
[3] रेपि—छ.
[4] स्वाराज्यं—छ.
[5] धाराम्—ख, छ ; रां—ख.
[6] प्रसन्नौ—छ, ज.
[7] वर्गान्—ज.
[8] वृष्टिम्—छ.
[9] This verse is omitted in छ ; संछिन्नस्फुटचरणाननेक्षणेन—च.

आबद्धाः परिशिथिलातपत्रकूर्मै-
राभीलै[1]श्श्लथकरिहस्तदन्दशूकैः ।
प्रच्छन्नाः [2]प्रशिथिलचामरालिफेनैः
प्रत्यग्रा युधिरुधिरापगाः प्रसस्रुः ॥ ३९ ॥

योधैर्नस्समम्मुपयाति युद्धतन्त्रं प्रस्मेरस्मयमिह पारसीकसैन्यम् ।
अस्माकं परिभव [3]ईत्यापाङ्गितस्सन् [4]उत्थाय स्वयमुदयुङ्क्त पार्थिवेन्द्रः ॥ ४० ॥

दक्षस्याध्वरदलनात्तकक्ष्यमीशं दैतेयप्रलयकृतोद्यमं च देवम् ।
गाण्डीवाङ्कनमपि खाण्डवावतीर्णं सक्रोधं युधि सुभटाश्शशङ्किरे तम्[5] ॥ ४१ ॥

प्रासाग्रात्कतिचन पट्टसेन कांश्चित्कानप्याशुगतिकरैः कृपाणतोऽन्यान् ।
निर्भिन्दन्निजभु[6]जनैपुणेन सोऽयं पृथ्वीशः [7]प्रतिविमतं पृथक्किलासीत् ॥ ४२ ॥

दीप्तायां भुजमहसा द्विपेन्द्रहस्तानुत्खायाऽऽहवभुवि पातयन्नुदस्तान् ।
वीरोऽयं हुतभुजि जुह्वतो द्विजिह्वान् व्याकार्षीदिव जनमेजयस्य वृत्तिम् ॥ ४३ ॥

विज्ञातुं चपलतया रसान्विभिन्नान् सोत्कण्ठा किमहितकण्ठशोणितेषु ।
वैय्यग्रान्नृपकरवालिका वलन्ती वीराणां न खलु [8]व्यखण्डनाद्व्यरंसीत् ॥ ४४ ॥

आयातो विजयमनोरथाधिरूढो वैय्यग्रात्तदपि विखण्डितोरुकाण्डः ।
आलोकि स्रवदसृजारुणोऽश्वसादी सारथ्यं विदधदिवास्य शौर्यभानोः ॥ ४५ ॥

[1] भीरा--छ. [2] प्रतिहत—अ, क, ख, ङ, छ.
[3] जन्यवां हि—छ. [4] युद्धाय—छ.
[5] Here ends manuscript ज. The later portions are therefore not available in it. [6] जननै—छ.
[7] पथि वि—अ, क, ग, छ. [8] विख—छ.

एकस्योपरि शरमेकमेव मुक्त्वा धानुष्कस्स्वयमपिबत्तुरुष्क[1](सैन्यम्) सेनाम् ।
उच्छेषीकृतमिदमामिषं हि केनाप्यन्येन ग्रसितुमयुक्तमित्यवेत्य ॥ ४६ ॥

शौण्डीर्यावधिरवतीर्यसाह्यवार्तो निश्शङ्को युधि निरशेषयद्विपक्षान् ।
निर्मातुं पुनरपि तान्यथा विधातुः प्रायेण प्रतिकृतिरेकिकाऽपि न स्यात् ॥४७॥

निर्व्यूढाहवनियमप्रवर्तनेऽस्मिन्नेकाकी यवनपतिः पलायते स्म ।
पारीन्द्रे प्रकटविहारपारतन्त्र्ये वेतण्डः किमु विहरेद्विधूतशङ्कः ॥ ४८ ॥

वीरोऽयं[2] युधि हतशेषमश्वयूथं वेतण्डव्रजमपि विद्विषो गृहीत्वा ।
**कृष्णायां** कृतवसतिं दिनैस्स कैश्चिन्नेतारं निजमभजन्निधिं बुधानाम् ॥४९॥

श्रुत्वा तामथ मलुकप्रवृत्तिमुर्वीं सुत्राम्णा सह दृढसौहृदं विधातुम् ।
अन्तर्निश्चितमतिरादरा[3]त्सपादो नीतिज्ञो निजसचिवानिति न्यगादीत् ॥

सङ्ग्रामे नरसविभुस्स तातपादत्रातासीदयमपि तत्तपोविपाकः ।
आनम्रानवतितमां क्षमाभृदस्मानाचारो ननु पितुरात्मजैरलङ्घ्यः ॥ ५१ ॥

आत्मीयैरभिमतभाषितस्सदस्यैरारूढो हयमतिदूरलङ्घिताध्वा ।
**कृष्णायां** न्यधितबलं क्षितीशमौलेस्सञ्छन्नापरतटसीम्नि सैन्यवर्गैः ॥ ५२ ॥

प्रासन्नद्यस्पृशि सरितः पयस्यमुष्यास्सङ्क्रान्तास्तदुभयसैनिकानुबिम्बाः ।
पातालादुपरि गताः प्रजा इवासन् संद्रष्टुं नरपतिसैन्धवेशसन्धिम् ॥ ५३ ॥

पर्यस्तस्तदुभयसैन्ययोः परागो निस्साणध्वनिरपि निह्नुतान्तरिक्षः ।
वातोऽपि ध्वजवसनोदितो मिलित्वा मर्त्येशाश्वपतिम[4]तां किमन्वरुन्ध ॥ ५४ ॥

[1] महनत्तु—अ, छ.　　[2] वीरोरिं—छ.
[3] राहवात्—छ.　　[4] भटान्—च.

वाहेन्द्रस्सिततरवारवाणधारी निर्मोकाञ्चित इव निर्विषः फणीन्द्रः ।
आनम्रीभवदतिनम्रपूर्वकायः प्राणंसीत्पतिमवनेः प्रमृष्टदर्पः ॥ ५५ ॥

चमूमयपयोनिधौ सगरकुञ्जरं साध्वसा-
वहारगलितं **वराच्युतनृपस्स**भक्ति हरौ ।
अपालयत तत्क्षणादभयहस्तचक्रोदया-
त्कथं नु भवितान्तरं कमलनाभतद्भक्तयोः ॥ ५६ ॥

संप्रेष्यासौ शकपरिबृढश्शासिता दुर्मदानां
प्रत्यायासी**द्विजयनगरं** पञ्चषैरेव वारैः ।
अध्वश्रान्तामिव निजचमूमग्रतो वीजयन्तीं
वारंवारं भवनवलभीवैजयन्तीसमीरैः ॥ ५७ ॥

इति राजनाथकृतौ अच्युतरायाभ्युदयनाम्नि महाकाव्ये एकादशस्सर्गः ॥

# द्वादशस्सर्गः

सतोरणालीं शनकैः प्रतोलीं विशामधीशेऽथ विगाहमाने ।
आलोकनायाऽस्य निरस्य कार्यं पर्याकुलः पौरवधूजनोऽभूत् ॥ १ ॥
दिदृक्षयाऽमुष्य मृगेक्षणाभिः क्षिप्तारीबन्धलसद्गवाक्षा ।
पुरी च तद्वीक्षणपुङ्खिताशा विस्तारिताक्षी विललास नूनम् ॥ २ ॥
वतंसयन्ती वसुधावलारेस्समागमोक्तिस्तबकं सरागम् ।
परा[1] त्वरायत्ततया प्रयान्ती नवोत्पलं नार्पयति स्म कर्णे ॥ ३ ॥
हारै[2]स्तथोच्चैः स्तनभूभृदर्हैरलङ्कृतो भूमिभृतो नितम्बः ।
अरुन्ध यान्तीं बत मध्यमस्याप्यधस्तनो वेत्ति किमर्हणानि ॥ ४ ॥
आभोगिनं[3] मेखलया कुचाद्रिं
नक्षत्रदाम्नाऽपि नभोविलग्नम् ।
संभावयन्त्यास्त्वरया परस्याः
[4]क्रमः किलासीदयमक्रमोऽपि ॥ ५ ॥

[1] रं परायत्त—छ.
[2] तिलोच्चैस्स्त—छ.
[3] नीं—छ.
[4] From here to verse 26. are omitted in छ.

मञ्जीरमन्या महिलाकरस्थमङ्घ्र्योरदत्त्वैव रयादयासीत् ।
तयोः परीक्ष्याऽतिजवं स देयो जेतुः पुरस्तादिति जानतीव ॥ ६ ॥

नरेन्द्रवीक्षात्वरया न मार्गमालोकयेदक्षि ममेति काचित् ।
अङ्घ्र्योःर्भ्रमादञ्जनमञ्जिताक्षी प्रादाद्ध्रुवं दृक्[1]द्वितयं विहाय ॥ ७ ॥

विहाय डोलाविहृतिं प्रयाता काचित्क्षमायाः कमितारमेत्य ।
किं माधवः किं मदनोऽयमित्थं समाश्रिता संशयरूपडोलाम् ॥ ८ ॥

महीपतेरन्तिकमाससाद मनोभुवः काऽप्यसमाप्य पूजाम् ।
निजावमानान्नियतं स तस्यां निरूढकोपो निचखान रोपान् ॥ ९ ॥

विलासहंसीविनियुक्तशेषं मृषोदरी बालमृणालखण्डम् ।
धृत्वाऽगमत्तद्वपुषो विशेषान्विलेखितुं वर्णशिलामिवाऽन्या ॥ १० ॥

विलम्बसे किं विभुरागतोऽभूदितीरिता मीनदृगेकयाऽन्या ।
तन्निश्चयज्ञानकृते किमग्रे प्रस्थाप्य चेतस्तदनुप्रयाता ॥ ११ ॥

ईषत्सहस्व त्वरितोऽस्मि सोऽहमित्यर्थ्यमानाऽऽभरणारवेण ।
प्रायेण मञ्जीरसमेतमेकं पदं परं प्रार्थयताऽपरस्याः ॥ १२ ॥

प्रसृत्य नीराजनपात्रमग्रे
परागता स्नेहदशाप्रदीप्तैः ।
स्मराग्निदीप्तैः स्फुरताऽऽत्मनैव
नीराजनां निर्वहति स्म राज्ञः ॥ १३ ॥

निशाम्य तं दूरितसाम्यमन्तर्निखातकन्दर्पनिशातबाणा ।

[1] दृक्पदमर्पयित्वा—अ.

आमीलयन्मीनदृगक्षि काचिदन्यं न पश्याम्यनु नेति नूनम् ॥ १४ ॥

विमुञ्च बाहू न पुरो विधेहि कुचोपगूहं कुटिला हि सख्यः ।
इतीव मौग्ध्यादितरा ययाचे सनिंसितं स्वेदिनि तत्तदङ्गे ॥ १५ ॥

उदञ्चितं न्यञ्चितमुत्तरङ्गश्वासादुरोजद्वयमाशु यान्त्याः ।
उदस्य मध्येन पुनर्यथावन्नीतं किमेतद्भरनिस्सहेन ॥ १६ ॥

विस्मृत्य लाक्षाञ्जनगन्धसारविशेषमङ्गेषु विधातुमेका ।
रयादयासील्लिखितुं नृपेन्दुं रागादियं रक्षितसाधनेव ॥ १७ ॥

परा कुचाग्रात्पतितासु हारमुक्तासु संवीक्ष्य मुहुः स्खलन्तीम् ।
प्रधावमाना बहुमन्यते स्म विभूषणे विस्मृतिमेव काचित् ॥ १८ ॥

आसीदतिक्ष्माभुजि काचिदन्तरतुष्यदासेचनकाभिरूप्ये ।
न तावदन्या मुमुदे नताङ्गी तद्विप्रयोगं हृदि तर्कयन्ती ॥ १९ ॥

विलोलहारावलिरोधहेतोः करं निधायोरसि काऽप्ययासीत् ।
निरुन्धती स्वान्तमिवाग्रतस्स्वं विहाय यातुं विहिताभिलाषा ॥ २० ॥

आराधितोऽद्य प्रतिमामनोभू-
रर्चाविशेषार्पितजीवनो मे ।
[1]पूजां गतायाः किमु दातुमिष्ट-
मायात इत्येष कयाप्यधायि (प्यतर्कि) ॥ २१ ॥

सालक्तकायां [2]पदवीथिकायां सञ्चार्यसञ्चार्य सरोजमोहात् ।
अनुद्रुता कामपि (चन) हंसिकाऽस्या न्यवर्ति नृत्यत्कचनीरदेन ॥ २२ ॥

[1] सर्वाङ्गिताया:—ज्ञ. [2] थ—ज्ञ.

गतित्वरा केशगलत्प्रसूनमवापदस्यान्तिकमायताक्षी ।
प्रयुज्य बाणान्परितः प्रसूनमालामयीं तां मदनो वितेने ॥ २३ ॥

असंनिपत्यायतलोचनानामारूढहर्म्याग्रभुवामपाङ्गाः ।
विदूरपातादिव नाक्षमन्त व्यावर्तितुं हन्त विमोहवन्तः ॥ २४ ॥

विभोः परस्याश्च विलासवत्या मुखाब्जसौरभ्यवशंवदाशाः ।
गतागतानि प्रथयांबभूवु[1]र्दूता इवाग्रे मुखरा द्विरेफाः ॥ २५ ॥

नृपालकोत्तंसनिरूढमन्तरापूर्यनिर्यातमिवानुरागाम् ।
प्रधाविनी वक्षसि काऽपि हारप्रहारतः पाटलिमानमूहे ॥ २६ ॥

हस्ते दधाना निजकेशहस्तं विस्रस्तमाल्यं विपुलेक्षणाऽन्या ।
नखश्रिया नाटितकैतवान्तर्दलावरूढा द्रवति स्म काचित् ॥ २७ ॥

निवेदयन्तीव निजामवस्थामपाङ्गभेदैरपरा कृशाङ्गी ।
निशामयामास नृपं प्रशान्तं निर्भर्त्सयन्तीव निरुन्धतीव ॥ २८ ॥

पर्यस्तहारस्तबकं प्रयान्त्या
स्तनावभूतां तरलोत्तरीयौ ।
अन्तःपुरस्याऽऽविशतोऽवनीन्दोः
पुरः प्रणीताविव पूर्णकुम्भौ ॥ २९ ॥

पत्युः क्षमायाः पतके सरक्ते परा नताङ्गी प्रतिबिम्बिताङ्गी ।
विश्वंभरोरस्थल[2]मन्दिराया व्यडम्बयद्विभ्रममिन्दिरायाः ॥ ३० ॥

[1] र्दूता—च. [2] स्तट—च, छ.

विजित्य यान्त्या मरुतोऽपि वेगमग्रे भवन्केलिमृगोऽपरस्याः ।
ततान तद्व्याहतयेव सेर्ष्यो जवान्तरायं जलजेक्षणायाः ॥ ३१ ॥

कर्णोत्पलं स्रस्तमभूत्प्रयान्त्याः कस्याश्चिदुत्साहयितुं पदाब्जे ।
संप्रेषितं वा सहवाससख्यात् दिदृक्षुणा दृग्द्वितयेन भूपम्[1] ॥ ३२ ॥

पदेपदे कीर्णविभूषणाऽन्या प्रधावति स्म प्रसभं नताङ्गी ।
आकृष्टकोदण्डमनुद्रुता किं मनोभुवा मानविमोचकेन ॥ ३३ ॥

परा नृपालोकनपारवश्यान्न लाक्षया रञ्जयति स्म पादौ ।
अलक्तरागादपि रक्तिमानं अवापतुस्तावतिवेगगत्या[2] ॥ ३४ ॥

परिश्लथा मण्डनपद्मरागमालाकुचाग्रान्महिलामतल्याः ।
चकार बिम्बाधरसाम्यहेतो[3]र्भृताभिलाषा भृगुपातमेव[4] ॥ ३५ ॥

कयाऽपि मुञ्चेति गवाक्षमेका कर्णोत्पलेनाभिहता सलीलम् ।
[5]स्मरेषुपातेषु विवेदनेदं खेदेऽधिके खेदलवः कियान्वा ॥ ३६ ॥

नृपागमाकर्णनतः परस्या नेत्रे मुदाक्रान्तवतंसपुष्पे ।
आनङ्गमस्त्रं किमलङ्घयेतां भोज्यं विभुज्येति तदाप्तिसौख्यम्[6] ॥ ३७ ॥

नीलारविन्ददलवन्दनदामलक्ष्मीं
नेता भुवोऽथ विपणिं रमणीकटाक्षैः ।
उल्लङ्घ्य वासगृहमासददुत्तमाङ्ग
साभोगनादभरसङ्कुलसैन्यसङ्घः ॥ ३८ ॥

[1] Here ends घ. [2] वत्याः—छ. [3] द्रुता—च.
[4] दमेव—च. [5] शरेषु—अ.
[6] Here ends छ; with the colophon इत्यच्युतरायाभ्युदये द्वादशस्सर्गः । हरिः ओम् ।

वर्षन्नेकं वसन्ते वसुचसमधिकं वाञ्छिताद्याचकानां

मन्वादीनां विवृण्वन्निव नयपदवीं मानवान् रञ्जयित्वा ।

आतन्वन्नर्मगोष्ठीं कविभिरविरतामच्युतक्षोणिपालः

पारावारैः परीतामवति वसुमतीं प्राज्यसाम्राज्यलक्ष्मीम्[1] ॥ ३९ ॥

इति राजनाथस्य कृतावच्युतरायाभ्युदये[2] महाकाव्ये द्वादशस्सर्गः[3]

[1] क्ष्मीः—च.

[2] दय नाम्नि महा—ग.

[3] बिन्दुदुर्लिपिविसर्गवीथिकाशृङ्गपङ्क्तिपदभेददूषणम् ।
हस्तवेगजमबुद्धिपूर्वकं क्षन्तुमर्हथ समीक्ष्य सज्जनाः ॥
श्रीगुरुभ्यो नमः । शुभमस्तु—अ. ;

हरिः ओम् । शुभमस्तु । करकृतमपराधं क्षन्तु—
मर्हन्ति सन्तः । श्री विश्वेश्वराय नमः ।—क. ;

समाप्तः । श्रीरामाय नमः ஆடி மீ 2 ; धर्मदीक्षितेन.
लिखितम् । हरिः ओम् ।—ख. ;

हरिः ओम् । शुभमस्तु । रामचन्द्राय नमः ।
शिवाभ्यां नमः ।°

अप्यप्रगल्भस्सदसद्विवेके काव्यं सतां निन्दति दुर्विदग्धः ।
यतः सनेपथ्यभिदामजानात् काषायतः क्रोशति सारमेयः ॥
पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरत् भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥
कर्तुर्लघुत्वेऽपि न निन्द्यमेतत् काव्यं महान्तोऽपि कटाक्षयन्तु ।
क्षुद्रार्जितत्वेऽपि महारसाढ्यं लभन्ति नो किं मधु राजराजाः ॥
कृतिर्नवीनेति न दूषणीया गुणागुणावत्र विचारणीयौ ।
परिग्रहार्हः प्रथमस्तयोः स्यादन्यस्तु विन्यस्तपदान्तरोऽस्तु ॥

मान्यैः सद्भिर्मत्कृतिः प्रेक्षणीया
सा चेत्साध्वी तैस्तदङ्गीक्रियेत ।
निन्द्येयुर्वा तेन मे स्याद्विषादो
मातृक्रान्तः कोपपङ्गुत्वमेति ॥
धीमत्स्वधिकृताशेषकल्याणगुणराशिषु ।
मदुक्तवादोऽयस्कारवाटिकासूचिविक्रयः ॥
मदर्वाचीनतादोषात्कृतिरेषा न निन्द्यताम् ।
उपेक्ष्यते पयः किं नु भाण्डवैरूप्यदर्शनात् ॥

करकृतमपराधं क्षन्तुमर्हन्तु सन्तः ॥

श्रीरस्तु नस्सन्ततम् ॥—ग.

The colophon of च reads thus :—

इति राजनाथस्य कृतौ अच्युतरायाभ्युदय . . . . . . . द्वादशः सर्गः । श्रीरघुनाथाय नमः ।

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः । हरिः ओम् । शुभमस्तु । अस्मद्गुरुभ्यो . . .

Here ends झ. The colophon reads :—

इत्यच्युतरायाभ्युदयनाम्नि महाकाव्ये

द्वादशः सर्गः—इत्यच्युतरायाभ्युदयः समाप्तः

## APPENDIX I

# INDEX OF HALF-VERSES


अ

अक्षीणं दृगरुणिमाननव्यवस्थाम् xi, 15
अखिलं रहस्यमवदज्जनाग्रतः ix, 62
अखिलापगान्तरभिपूरणोत्सुकः ix, 27
अग्रतः प्रचलितस्य खरांशोः viii, 11
अग्रे दृशो विंदधतीव जगत्त्रयैक्यम् x, 25
अङ्कनं विरचयन्निव भूयः viii, 9
अङ्के पादावर्पयित्वा रमाया vii, 30
अङ्गजागमलिपेरुडुनाम्नो viii, 19
अङ्घ्र्योर्भ्रमादञ्जनमञ्चिताक्षी xii, 7
अज्ञाताशनिपतनादिशासुलीलाम् xi, 6
अञ्चद्रत्नस्यात्तमौखर्यपूर्तेः vii, 10
अतिदीनमर्हति न गाढबन्धनानि ix, 68
अतिरेकतः प्रणयपूरपूरिता ix, 46
अथ दत्तमप्यगमि न श्रवःपदम् ix, 74
अथ दूतिका हरिणशाबचक्षुषा ix, 27
अथ नाभिमण्डलसुरङ्गमाविशन् ix, 75
अथ मानिनी रजहिमं समं प्रियैः ix, 57
अथवा कथं नु निगदेदपास्तभीः ix, 22
अथवास्ति चेदयि नताङ्गि सह्यताम् ix, 40
अदसीयबिम्बमधिरत्नभित्तिगम् ix, 67
अद्रीन्द्रस्तदभिहितक्रियास्फुलिङ्गैः xi, 5
अधरं गृहीतवति कामुके हठात् ix, 69
अधरं हठात्कृतवति त्रपामुदोः ix, 71
अधिगण्डमर्पितकराञ्चलच्छलात् ix, 16
अधिगम्य सान्त्वयितुमाशु दूतिका ix, 42
अधिपदमपि विष्णोश्चारयन्गोप्रपञ्चान् vii, 59
अधिफालमायतदृशान्ययाधृतम् ix, 12
अधिवासशालि मधु योषिता(दा)शयम् ix, 59
अधुना कया विधुतपक्षपातया ix, 47
अध्वश्रान्तामिव निजचमूमग्रतो वीजयन्तीम् xi, 57
अनभिज्ञता परिचितेष्वभिज्ञता ix, 63
अनयोः कदाऽपि विरहो न संभवेत् ix, 1
अनिदानहासमयकौमुदीं दिशन् ix, 61
अनुचिन्तनात्मकमजानती सखीम् ix, 23
अनुद्रुता कामपि (चन) हंसिकाऽस्याः xii, 22
अनुवादतो गृहशुके प्रकाशयति ix, 35
अन्तरिक्षफणसीम्निविकीर्णैः viii, 37

अन्तर्निश्चितमतिरादरात्सपादो xi, 50
अन्त:पुरस्याविशतोऽवनीन्दो: xii, 29
अन्ते वसन्तमपसारितपाशबन्धम् x, 12
अन्धकारभरकर्दमजातै: viii, 38
अन्धकारविजयादमृतांशो: viii, 68
अन्यश्चमूनिबिडितानविषह्यमार्गान् x, 35
अन्यं कञ्चित्त्वां विनाम्नाय मार्गा vii, 42
अपदिश्य किञ्चन सखीषु गत्वरीषु ix, 73
अपदे मदेन हसितञ्च रोदनम् ix, 63
अपराधजातमधिरोपयन्तु मयि ix, 40
अपरा सखीमभिनवामिवादरात् ix, 26
अपरेत्य संशयमवेत्य हंसिका ix, 37
अपहृत्यवैरमितरेतराश्रितम् ix, 15
अपालयत तत्क्षणादभयहस्तचक्रोदयात्
xi, 56
अपि तत्कलाश्रयमजीजयद्यत: ix, 13
अपि दीपिकार्चिषि मुहुस्स तर्जनम् ix, 63
अपि मुक्त एष कुरुते न किं व्यथाम् ix, 51
अपि विप्रयोगमधिगम्य भाविनम् ix, 31
अबलास्वलङ्कृतितरङ्गितादरा ix, 16
अभिके तवाभिरतिरस्तु वा न वा ix, 48
अभ्येतुं जिगमिषुमैक्ष्यत: प्ररूढात् xi, 26
अभ्येत्य प्रतिघमधीश्वरश्शकानाम् xi, 19
अभ्रश्रियैव विजिहीषति भानुमालिनि x, 14
अम्बरे नवयवाञ्चितलाक्षा viii, 45
अम्भ: क्रीडारम्भिणो दिङ्मदेभा vii, 7
अम्भोजिनीपरिषद: किमिहानुकुर्वन्ति x, 10
अम्भोवाहानम्बुपातुं समेतान् vii, 9
अम्भोवाहानर्भकानङ्कभाजो vii, 2
अयि किं बिभेषि भवदन्तिके सखी ix, 67
अयि खेदखिन्न युवयोरमेलनम् ix, 50
अयि नैव वाञ्छति परामसौ तथा ix, 45
अयि मार्ज्यते लगति चेदपाङ्ग इति ix, 68
अयि मां विबोधयसि मोहजल्पितानि
ix, 24
अरुन्ध यान्तीं बत मध्यमस्या xii, 4
अर्कहेमकलशेर्णवमग्ने viii, 43
अर्घ्योदकानि महसामधिपाय दातुम् x, 10
अर्दितस्य किरणैरहिमांशो: viii, 55
अर्दितस्य जगतस्तिमिरौघै: viii, 41
अर्यम्णो हरिति तथा यथांशु धोरणी xi, 2
अलक्तरागादपि रक्तिमानम् xii, 34
अलघुस्तनस्पृशि ततो नवा वधू: ix, 69
अलसालसालपित वर्णसन्तते: ix, 62
अवलम्ब्य रोमलतिकामवातरत् ix, 75
अवलोकयेत्प्रियमनेनसंलपेत् ix, 26
अवलोक्य हंसकुलमञ्चितैर्गतै: ix, 5
अवितुं मनोजनिधिमात्तवेष्टन: ix, 7
असन्निपत्यायतलोचनानाम् xii, 24
अस्तशैलतटकाननलीनै: viii, 11
अस्त्रौघैरपि निवारिताऽस्त्रमासीत् xi, 36
अस्माकं परिभव इत्यपाङ्गितरसन् xi, 40
अंशुकन्दलरसादमृतांशो: viii, 34
अंशुमालिनि विशत्यपराद्रिम् viii, 28
अंशुसन्ततिरशीतमरीचे: viii, 3

आ

आकर्ण्य कर्णमधुरामिति मागधोक्तिम् x, 20
आकृष्टकोदण्डमनुद्रुता किम् xii, 33
आकृष्टासीत्कर्कशेनार्ककन्या vii, 53

आक्रन्दन्तः स्वैरमन्तस्त्रपन्ते vii, 6
आक्रम्य त्वद्राज्यमाजानसिद्धम् vii, 25
आगच्छदेतदधिकं न खलु व्यरंसीत् x, 28
आच्छिद्य कङ्कणनियन्त्रितमङ्घ्रिसूत्रम् x, 38
आजानेयस्याङ्घ्रिनिर्घातधारा vii, 57
आततान भुवनान्तरयात्रा viii, 7
आतन्वन्नयमयथातथं यथावत् xi, 20
आतन्वन्नर्मगोष्ठीं कविभिरविरतामच्युतक्षोणिपालः xii, 39
आत्तवत्युदयम्बुजबन्धौ vii, 2
आत्मन्यारादन्तरीयायमाने vii, 12
आत्मीयैरभिमतभाषिभिस्सदस्यैः xi, 52
आदरेण कुसुमैरिव कीर्णैः viii, 36
आनङ्गमस्त्रं किमलङ्घयेताम् xii, 37
आनन्दाब्धौ क्रीडति स्माङ्गलग्नाम् vii, 58
आनन्देनोत्तालभश्रान्तसंवित् vii, 29
आनम्रानवतितमां क्षमाभृदस्मान् xi, 51
आनम्रीभवदतिनम्रपूर्वकायः xi, 55
आनीलानामङ्गभासां विलासात् vii, 32
आनृत्यत्तुरगखुराभिघातहस्ति xi, 36
आबद्धभ्रुकुटिरयं वितानमालीम् xi, 18
आबद्धाः परिशिथिलातपत्रकूर्मैः xi, 39
आबुद्धय तथ्यमिति कूटकृतं भटानाम् x, 30
आभोगवत्प्रथमशैलकुचाग्रलीनम् x, 18
आभोगिनं मेखलया कुचाद्रिम् xii, 5
आमीलयन्मीनदृगक्षि काचित् xii, 14
आयतान्किमपि दीधिति दण्डान् viii, 4
आयातो विजयमनोरथाधिरूढो xi, 45
आयान्तीमथ यवनावनीशसेनाम् xi, 29
आयान्ती स्वयमवनीव यावनीयम् xi, 25
आरादालोक्यैनमौत्सुक्यभाजः vii, 23
आराधितोऽस्य प्रतिमामनोभूः xii, 21
आराध्या ते तावदाज्ञेति चोक्त्वा vii, 27
आरुह्य द्रुतमपरेऽपतञ्छकानाम् xi, 8
आरूढवाहनिवहैरनुबद्धरागम x, 21
आरोपिता तुरगमाशु नियम्य कण्ठम् x, 31
आर्द्रासिक् तुमुल निषद्वरावसीदत् xi, 34
आलक्ष्यतः क्षितिधराक्रमणापदेशात x, 25
आलम्बं त्वामन्तरेण श्रुतीनाम् vii, 41
आलम्ब्यायतपृथुशुण्डयाङ्घ्रिकाण्डे xi, 35
आलवालमनुरागलतायाः viii, 54
आलापभङ्गिभिरतीव तरङ्गिताभिः x, 44
आलिप्तमूधसि गवांकुलमच्छपङ्कैः x, 42
आलीढांबरमपदिश्य धूमजालम् xi, 11
आलोकनायाऽस्य निरस्य कार्यम् xii, 1
आलोकिस्त्रवदसृजारुणोश्वसादी xi, 45
आलोक्य क्षितिपमणेरथायुधीयैः xi, 1
आलोक्य दूरमितरेतरमश्रुयोगात् x, 7
आवर्तकर्णविवरार्पितफेनकूल x, 22
आविर्मिथः कलकलारवमन्तराले x, 29
आविश्याहतविमतेषु ते बलानाम् xi, 9
आवृते तमसि गाढमधस्तात् viii, 16
आशङ्कय धावनमरातिमहीपतीनाम् x, 26
आशङ्कय स्वयमनुरागिणीं नरेन्द्रे xi, 15
आशान्तर्दिग्गजमदाम्बुविलम्बिनिर्यत् x, 27
आशाभागानीषदाक्रम्य भूयो vii, 3
आशास्वहंप्रथमिकोल्लसितैरनीकिनि x, 26
आशां कुबेरभरितामवगाहमानः x, 46

आश्लिष्यति स्वमचिरेण हरिद्वलारेः x, 18
आश्लेषविच्युतिसहानवकल्प्य मुग्धान् x, 9
आसाद्यासावाद्यमभ्यर्च्यपुष्पैः vii, 34
आसाद्योर्वीनायकस्यौपकार्याम् vii, 15
आसीदति क्ष्माभुजि काचिदन्तः xii, 19
आस्फाल्यान्तर्बिम्बितादिन्दुकोणात् vii, 8
आस्वाद्य तोयमधिवर्त्म जनानजस्रम् x, 27
आस्वाद्य पूर्वमविशङ्कमभीशुमिन्दोः x, 2
आहन्ति कोऽपि कशया न पुनर्युगान्ते x, 43

इ

इतरस्त्रियस्सरस यावकार्पणात् ix, 8
इतरस्त्रिया वदनमिन्दुमण्डलम् ix, 13
इति दूतिका हृदयहारिणीगिरा ix, 38
इति मे न सूक्तिपटिमावगम्यताम् ix, 44
इतीव मौग्ध्यादितरा ययाचे xii, 15
इत्युक्त्वा परिषदमीशिता हयानाम् xi, 23
इत्युक्त्वाऽसावेतदीयानुमत्या vii, 16
इत्येतस्य प्रायशो हेतुरासीत् vii, 46
इत्येव तानि परिहृत्यवलन्ति मन्दम् x, 13
इत्वरीजनहितं करवाणी viii, 15
इत्वरीभिरपि चत्वरकोणे viii, 27
इन्दीवराण्युदयदीशितरिग्रहाणाम् x, 13
इन्दुबिम्बनिभनीविविराजत् viii, 66
इन्दुबिम्बमिदमैक्षिविहायो viii, 57
इन्दुरागलहरीहयहेत्रः viii, 67
इयतीं क्षमेत किमयं विलम्बनाम् ix, 25
इह देहि वीक्षणमितीरितालिभिः ix, 32

ई

ईर्ष्यया किमुदधौ हरिदैन्द्री viii, 47
ईषत्सहस्व त्वरितोऽस्मि सोऽहम् xii, 12

उ

उच्चण्डान्मण्डलाग्रान् मलिनतरतमः कण्टकान्खण्डयित्वा viii, 72
उच्चैर्भूतं राशिमुच्चावचानाम् vii, 21
उच्छेषीकृतमिदमामिषं हि केनापि xi, 46
उत्क्षिप्य क्षितिकुहरादुपात्तनृत्तैः xi, 1
उत्थितोऽयमितारोद्धृतरश्मिः viii, 43
उत्पलिन्यधिभुवार्पितमङ्के viii, 60
उत्पलेष्विव विकस्वरमुच्चैः viii, 20
उदञ्चितं न्यञ्चितमुत्तरङ्ग xii, 16
उदस्य मध्येन पुनर्यथावत् xii, 16
उद्धृतान्युपलमृदर्पणेन राम xi, 7
उद्ययौ जलनिधेरुडुजानेः viii, 41
उपजातमेकमुपरीव बुद्बुदम् ix, 11
उर्वीपुत्र्या योजयित्वा जगत्याम् vii, 11
उर्वीयोषिच्चेलमुत्तंसिपुष्प vii, 1
उर्वीं मग्नामुद्धरन्ती न केषाम् vii, 48
उर्व्यां दुर्वारोर्मिका कङ्कणाङ्कम vii, 12
उलङ्घ्य वासगृहमालदुत्तमाङ्ग xii, 38

ए

एकस्योपरि शरमेकमेव मुक्त्वा xi, 46
एकं मुक्त्वोर्वीमगुर्वीं दधाना vii, 54
एतत्प्रयातु बलमेतदपि प्रयातु x, 28
एतन्न पश्यति ममोपरि पातु कोश्वः x, 40

औ

औत्सुक्येनानीतकक्ष्याविशेषः vii, 15

औदार्येणावेदयन्तं किलोर्व्याम् vii, 20

क

कक्ष्यान्तरेऽथ मगधाः करजाग्रयोत x, 1
कक्ष्यान्तरेषु कलितस्थितिभिः पुरैव x, 21
कज्जलालिकपटेन तदीयम् viii, 16
कटकेन मौक्तिककरम्बितश्रिया ix, 15
कठिनाशयस्तमिति कापि गर्हणा ix, 20
कथमप्यसौ कमललोचना मम ix, 34
कथयामि किं नु सखि कामिनः कृते ix, 24
कबरीकलापतमसा विसारिणा ix, 76
कयाऽपि मुग्धेति गवाक्षमेका xii, 36
कर्णायुष्यस्यन्दिभिः काव्यबन्धैः vii, 17
कर्णोत्पलं स्रस्तमभूत्प्रयान्त्याः xii, 32
कलुषीकृताक्षियुगलेव सा किरति ix, 33
कल्लोलजालशिशिरेण कवेरजायाः x, 45
कश्चिच्छशः कलकलाकुलमेव लोकैः x, 37
कश्चिद्द्रयेन सह कापथधावितेन x, 33
क्षमसे त्वमाशयमलीढनैष किम् ix, 54
क्षिप्तो भारः शिक्षणाद्दुर्मदानाम् vii, 57
कान्तोपगूढचरमाङ्गतया गजस्य x, 40
कामभूरमणदिग्जययात्रा viii, 66
कारानिभात्कमलकुड्मलतश्चिराय x, 4
कारुण्याम्भोराशिजीमूतमुर्व्याः vii, 33
कालयूनि दिवि कर्षति शाणे viii, 69
किमपि प्रियाय गदितुं प्रियोत्तमा ix, 23
किमयं निरागसि किमङ्गसागसि ix, 49
किमहं वदामि तदिहेति मन्मुखात ix, 21
किमुत श्रुतं किमुत वीक्षितं कुतोऽपि ix, 34
किमु तान्निवारयितु मायतायतम् ix, 29
किं माधवः किं मदनोऽयमित्थम् xii, 8
किं वाऽयं तव पतिरेष वा किमु स्यात् xi, 12
किं व्यपोहितुमना भृगुपातात vii, 3
कृतमीरितेन बहुना कृशोदरी ix, 37
कृपणां चिराय कमलेव वार्षिकी ix, 56
कृष्णरूपमपि सङ्कुचदब्जम् viii, 24
कृष्णायां कृतवसतिं दिनैस्सकैश्चित xi, 49
कृष्णायां न्यधितबलं क्षितौ शमौलेः xi, 52
कुक्षौ निक्षिप्यैव लोकानवन्तम् vii, 43
कुङ्कुमेन रजसा कुनटीनाम् viii, 46
कुचशैलसीमनि कुरङ्गनाभिना ix, 6
कुचशैलसीम्नि कुटिलालका परा ix, 14
कुटिलभ्रुवा कुटजसूनगर्भकम् ix, 9
कुटिलाक्षि शोधयितुमेव मे मनः ix, 52
कुत्रचिन्निलयकोणनिलीने viii, 14
कुरु मे प्रसादमिति कोपनिर्णयः ix, 19
कुसुमेषुणाभिहतगुम्फिताश्शराः ix, 29
कूजतस्समपुषन्कुमुदिन्यो viii, 61
कूजति क्वचनकौशिकलोके viii, 7
कूलमुद्रजमलीयत सन्ध्या viii, 51
केचित्स्वामिन्केरलेशप्रयुक्ताः vii, 16
केनाप्यक्ष्णोः नैवलक्षीकृताङ्घ्रिः vii, 55
कौमुदीकलशसागरमध्य viii, 56
कौमुदीपयसि कल्पितभूयः viii, 40
कौमुदीह्रदजुषा हृतमुक्तैः viii, 34
क्रीडतां किमपि कीटमणीनाम् viii, 28
क्रोधाग्नौ हृदि निहितोदयेशकेन्दोः xi, 16
क्व गतामतिस्तव रते कृते मनो ix, 45
क्वापि क्रमोपचितकूजनधोरणीका x, 9

ग

गतागतानि ग्रथयांबभूवुः xii, 25
गतित्वराकेशगलत्प्रसूनम् xii, 23
गदितुं न गद्गदिकया नृशंसताम् ix, 22
गदितुं प्रियागममुदं समागतो viii, 2
गन्धर्वहेषितरवैर्गजगर्जितैश्च x, 23
गम्भीरध्वनिलघुलोहनालकीर्णा xi, 6
गम्भीराम्भोगाधतत्वं समस्तम् vii, 48
गाण्डीवाङ्कनमपि खाण्डवावतीर्णम् xi, 41
गाधतत्वमधिगत्यगभीरे viii, 4
गीर्वाणावसथगिरेः गरीयसस्स्यात् xi, 22
गोपस्त्रीणां त्वङ्कजङ्गोसि विष्णो vii, 55
गोपालकोऽयममृतं गुरुमप्रमेयम् x, 12

च

चकार बिम्बाधरसाम्यहेतोः xii, 35
चक्रवाकमिथुनस्य सरस्याम् viii, 8
चञ्चद्ग्रासः पल्लवं चामराणाम् vii, 18
चञ्चरीककुलझङ्कृतिमन्त्रा viii, 36
चञ्चुकोटिमिषदंशिकयाशा viii, 49
चञ्चुविश्लथबिसाञ्चितमार्गः viii, 9
चञ्चूपुटेषु कलयन्ति चकोरकान्ताः x, 2
चमूमयपयोनिधौ सगरकुञ्जरं साध्वसा xi, 56
चरमाङ्गमेत्य सहचारिणाऽपरा ix, 41
चर्मान्तप्रतिफलसङ्कुचच्छरीराः xi, 29
चातुर्याचटुलमृगेन्द्रशातदंष्ट्रा xi, 27
चालयन्स्तनिनदं भ्रमराली viii, 63
चिन्तामन्तस्त्वन्निबन्धां कदाचित् vii, 38
चुक्रुशुः शकुनयः किमशक्ताः viii, 13

छ

छायया निववृते जगति स्यात् viii, 2

ज

जम्बालमग्नचरणे शकटे चिराय x, 43
जानीमस्ते विस्तृतं जैत्रलक्ष्म्याः vii, 52
जाने शुकं जहिहि खेदमपाशमास्ते x, 38
जेताकश्चिन्मीनलक्ष्मा जगत्याम् vii, 46
ज्योत्स्नापूरैरपारैः विशददशदिशस्फूर्तिमत्येव कीर्त्या viii, 72
ज्योत्स्नाम्बुपूरमपसार्य दिशावकाश x, 5

त

ततान तद्व्याहतयेव सेर्ष्यो xii, 31
तत्राऽपि सङ्कुचददश्छदपीडितोऽभूत् x, 4
तत्रावकाशमनवाप्य तथा विमर्दात् x, 35
तत्त्ववाक्यमिव तारकरूप viii, 23
तत्त्वं तदात्व जनितं स जनोपदिश्य x, 30
तत्स्तजज्ञतु किलाजनि सन्ध्या viii, 32
तत्सेनावलयितमैक्षिदण्डपाणे xi, 3
तद्दूरोपरिपरिनुन्नमुण्डषण्डम् xi, 35
तद्दृढस्थितिवशेन तमीशे viii, 53
तद्वैरिव तथा दधुराशाः viii, 69
तन्निर्गतस्तदनु तौलवभूमिपालः x. 46
तन्निश्चयज्ञानकृते किमग्रे xii, 11
तन्त्रविद्रतिपतेर्द्विजराजो viii, 48
तमिमं विहाय तवरूपमीदृशम् ix, 50
तयोः परीक्ष्यातिजवं सदेयो xii, 6
तरुणे गृहाश्रयिणि तत्कृतां व्यथाम् ix, 39
ताडितो नु करतामरसाभ्याम् viii, 1

तारकाङ्कुरपथः परिवाहः viii, 65
ते जात्यन्धा ये न पश्यन्ति हि त्वाम्
vii, 40
त्यक्त्वा दैत्यान् त्वज्जुषो जैत्रलक्ष्म्याः
vii, 50
त्रपतेस्म सा तदभिधानशंसने ix, 41

द

दक्षस्याध्वरदलनात्तकक्ष्यमीशम् xi, 41
दत्वा पाणिं दक्षिणं मौलिदेशे vii, 30
दत्वा बलिस्सहरये त्रितयं पदानाम् x, 41
दत्वाहारं देवताभ्योऽवतीर्णम् vii, 22
ददती श्रुती चतुरदूतिकावचसि ix, 17
दयिताजनस्य दृढमानकर्कशे ix, 61
दयिते करस्पृशि दरानुरागयोः ix, 71
दाशेरकत्वरितदर्शनतो महोक्षम् x, 32
दिक्षु विश्लथभवेक्ष्यतरक्षोः viii, 6
दिदृक्षयामुष्य मृगेक्षणाभिः xii, 2
दीपपङ्क्तिरिव भिद्यतमिस्रम् viii, 14
दीपारसजाड्यमवपत्यदशांशुकान्ते x, 17
दीपिका इव दिशाभिरुदस्ताः viii, 18
दीप्तायां भुजमहसा द्विपेन्द्रहस्तान् xi, 43
दुर्वारा यवनबलस्य धूलिरग्रे xi, 24
दुर्वारैरपि शरतोरणै रणोर्वी xi, 38
दृशमर्पयन्त्यपि च दीपिकार्चिषि ix, 70
दृश्यते स्मतिमिरं दिवसान्ते viii, 15
देदीप्यन्ते भक्तिदिव्याञ्जनेन vii, 37
देया दृष्टिः पूर्वमत्रेति पात्रे vii, 19
देवं दूरादेव देदीप्यमानम् vii, 34
द्योतलं ततमिवोपरि नीतम् viii, 42
द्योमणिर्नहृत इत्युडुराज viii, 37

ध

धन्यं मान्यं कोपि देवैस्त्वदन्यैः vii, 42
धृत्वागमत्तद्वपुषो विशेषान् xii, 10
धृत्वाऽग्रे यवनशिरांसि दर्शयद्भिः xi, 12
धृत्वा पिञ्छं देवविद्यात्वयाग्रे vii, 56
ध्याता ध्येयः पूजकः पूजनीयः vii, 44
ध्वान्तपङ्क्तिभिरभूयतमेयैः viii, 27
ध्वान्तभूतशमनाय दिनान्त viii, 55
ध्वान्तौघमुद्गरखरांशुखनित्रपातान् x, 5

न

नखश्रिया नाटितकैतवान्तः xii, 27
न च दृश्यते कथमिदं नवं नवम् ix, 48
न तावदन्या मुमुदे नताङ्गी xii, 19
न निवर्तसे पुनरसौ निरागसः ix, 53
न परं तवैव ननु मानविभ्रमः ix, 49
नरेन्द्रवीक्षात्वरया न मार्गम् xii, 7
नर्ममारुतपटस्तटिनीनाम् viii, 57
नवमेखलानिनदनाभ्युदञ्चनम् ix, 78
न विमुच्यते त्वयि नतभ्रुसायकः ix, 50
न व्यलोकि नलिनी परिणेतुः viii, 6
न हि वेश्मिकृत्यमिति मौग्ध्यनाटिका
ix, 20
नाकयोषिदुपभुक्तनखाग्रो viii, 38
नाकसीम्नि नलिनीदलकीर्णैः viii, 40
नाथं भुवो भणितिभिः नयजागरूकम् x, 1
नाथेऽङ्गभारमतनिष्टनतभ्रुवोऽस्या x, 31
नाधारश्चेन्नाथकूर्माकृतिस्ते vii, 47

नाभीभाजो नायकस्योक्तिदेव्या vii, 32
नालीकाक्षत्वत्कनाराचधारा vii, 52
नाळीकाक्ष प्राक्कृतान्नाटयन्ते vii, 9
नासीरसीम्नि चलिता नरपालमौलेः x, 44
निक्षिप्तमात्मनि सुरक्षितमाप्रभातम् x, 17
निखिलफणाधरेन्द्रनयनान्ध्यनिबन्धनकृत् x, 47
निखिलं निगूहनवचो बहिः स्वयम् ix, 59
निगदामि खेदमिति नैपुणीगिरा ix, 18
निजावमानान्नियतं स तस्याम् xii, 9
निरुन्धती स्वान्तमिवाग्रतस्त्वम् xii, 20
निर्गच्छतां कलकलैर्निबिडं भटानाम् x, 23
निर्गच्छतो निखिलसन्तमसं नियन्तुम् x, 19
निर्भर्त्स्यमानकुलिशारभटीनिरूढिम् x, 22
निर्भिन्दन्निजभुजनैपुणेन सोऽयम् xi, 42
निर्मातुं पुनरपि तान्यथा विधातुम् xi, 47
निर्याते मल्लुकनिबर्हणाय तस्मिन् xi, 10
निर्व्यूढाहवनियमप्रवर्तनेऽस्मिन् xi, 48
निवेदयन्तीव निजामवस्थाम् xii, 28
निशामयामास नृपं प्रशान्तम् xii, 28
निशाम्य तं दूरितसाम्यमन्तः xii, 14
निश्वासबन्ध इव नीरजलोकबन्धोः x, 15
निस्त्रिंशव्यतिहननस्फुलिङ्गदीपैः xi, 38
निस्त्रिंशैः नृपतिचमूभटा निहन्तुम् xi, 31
निस्सृतैरिव निदाघकणौघैः viii, 39
निःसरत्तिमिरदस्युसहस्रा viii, 33
नीडसीम्नि च निधाय कटाक्षान् viii, 10
नीत्या दण्डं नीयतां कश्चिदेव vii, 25
नीलारविन्ददलवन्दनदामलक्ष्मीम् xii, 38
नूनमुत्पलदलेषु सुमेषोः viii, 63
नृत्यतः पुरहरस्य निटाल viii, 17
नृपागमाकर्णनतः परस्याः xii, 37
नृपालकोत्तंसनिरूढमन्तः xii, 26
नेक्ष्यते दिनपतिर्नलिनीनाम् viii, 12
नेतुः भूजामातुरिष्टानि दातुम् vii, 13
न्यायशास्त्रमिव साध्वनुमान viii, 22

प

पङ्कजेषु वसतिं भ्रमराणाम् viii, 62
पतिरवनेः क्रमेण परिलङ्घ्य निजान्विवयान् x, 47
पतिरिव कमलायाः पाथसि क्षीरसिन्धोः ix, 79
पत्युर्निजस्य परिपालयतीव बोधम् x, 6
पत्युः क्षमायाः पतके सरक्ते xii, 30
पदपङ्क्तिभिः स्वपरिपन्थिपङ्कज ix, 8
पदे पदे कीर्णविभूषणान्या xii, 33
पद्माबन्धो ते हि बाधिर्यवन्तो vii, 40
पद्मिनीततकरं हिमभासा viii, 59
पद्मिनी पतिशुचा मकरन्द viii, 61
पन्थानं कमपि विलङ्घ्य पारसीक xi, 26
परया कयापि मृगनाभिपङ्किले ix, 4
परा कुचाग्रात् पतितासुहार xii, 18
परा त्वरायत्ततया प्रयान्ती xii, 3
परा नृपालोकनपारवश्यात् xii, 34
परिचारिकांसभुवि बाहुवल्लरीम् ix, 17
परिरम्भणे वलयितौ भुजाविव ix, 3
परिश्लथा मण्डनपद्मराग xii, 35
पर्यस्तस्तदुभयसैन्ययोः परागो xi, 54
पर्यस्तहारस्तबकं प्रयान्त्या xii, 29

पर्यायात् प्रतिभटदारुयन्त्रमुक्तैः xi, 4
पश्चात्परस्पररवानुगमाक्रमन्तौ x, 7
पश्चाद्गतस्य महतः पथि नावकाशम् x, 41
पश्चिमाचलदरी शबरीभिः viii, 1
पश्चिमाब्धिलहरीभरडोला viii, 5
पाकारातेः पादपावालमेकम् vii, 1
पाठीनाक्ष्यः प्रायशः पाशपाणेः vii, 5
पाणिनेर्मतमिवाखिललिङ्ग viii, 22
पाण्यग्रेण प्रक्कणत्पारिहार्यम् vii, 17
पातालादुपरिगताः प्रजा इवासन् xi, 53
पातिव्रत्यं या नृणां न त्यजन्ति vii, 39
पाथः तस्याः किं प्रलम्बावरोधः vii, 53
पाथोजिनीः किमखिलाः परिणीय दूरात् x, 16
पाथोधीनपि च तरीन् विना तरीतुम् xi,28
पादाग्रतः कमलिनी परिदृश्यमाना x, 6
पादेनोर्ध्वं प्रस्थिताजाण्डरन्ध्रात् vii, 51
पान्थबृन्दगरलं भुवनान्तः viii, 25
पारंपर्यात्त्रश्रयं व्यश्नुवानैः vii, 18
पारावारं वीचिकोत्क्षिप्तपाथः vii, 49
पारावारापारसीमोपकण्ठे vii, 11
पारीणास्ते चिन्निदानं पदाब्जम् vii, 37
पारीन्द्रे प्रकटविहारपारतन्त्र्ये xi, 48
पारे सिन्धोः प्राप्तसवेशमीशम् vii, 28
पालनाय जगतः परमासीत् viii, 44
पाषाणैः फणिमुखतोऽपि सिन्धुरेन्द्रैः xi, 9
पाहि क्षीणीं प्राक्तनीमित्यभाणीत् vii, 26
पीडयन्रथपदस्तनयुग्मम् viii, 51
पुरी च तद्वीक्षणपुङ्खिताशा xii, 2
पुंस्त्वे तु प्रभुरयमात्तपौरुषस्स्यात् xi, 19
पूजां गतायाः किमु दातुमिष्टम् xii, 21
प्रच्छन्नाः प्रशिथिलचामरालिफेनैः xi, 39
प्रच्युतं दिनमणिं भुवनश्री viii, 18
प्रज्वालो बलनिहितः प्रतीपपुर्याः xi, 13
प्रणतिस्तवेति परयाऽभिभाषणम् ix, 19
प्रणयोत्तरं किमपि पृच्छति प्रिये ix, 74
प्रणयोल्लसत्पुलकवर्मिताकृतेः ix, 65
प्रतिबिम्बभाजि पतके च सा दृशौ ix, 72
प्रत्यग्रप्रहरणवर्षदुष्प्रधर्षौ xi, 33
प्रत्यभादुडुविटस्फटिकेऽस्मिन् viii, 52
प्रधावमाना बहुमन्यते स्म xii, 18
प्रधाविनी वक्षसि कापि हार xii, 26
प्रमदोत्तराविव पयोधराभिधौ ix, 76
प्रयुज्य बाणान् परितः प्रसून xii, 23
प्रस्थानाय श्रीपतेरभ्यनुज्ञाम् vii, 27
प्रस्थाप्याहवकृतिनः प्ररूढरागान् xi, 23
प्रस्थिते स्फुटरतीश्वरचापा viii, 58
प्रस्फुरद्द्युतितमोमणिजालम् viii, 30
प्रस्मृत्य नीराजनपात्रमग्रे xii, 13
प्रहितापरेण परमाणुमध्यमाम् ix, 42
प्राकारान्तरनिभृतान् क्षितीशसेना xi, 2
प्राङ्गणेषु पटमण्डपिकानाम् viii, 71
प्राचीनान् परिभवता कुतोऽस्य पित्रा xi,21
प्रातिष्ठतारुतपवमानजवाभिमान x, 20
प्रादुर्भूते त्वत्प्रियाया रमायाः vii, 36
प्रादुर्भूयात् किं सुधापूर्णकुम्भः vii, 47
प्रादुश्शाकाचङ्क्रमाः प्रायशस्ते vii, 35
प्रादुस्तोयं प्रौन्मिषत्त्वत्पदाङ्कम् vii, 50
प्रापितेव धरणी परिणाहम् viii, 42
प्रायः क्षीरं पाययत्यौर्वतप्तम् vii, 2

प्रायेण मञ्जीरसमेतमेकम् xii, 12
प्रासन्नयस्त्रृशि सरितः पयस्यमुष्याः xi, 53
प्रासाग्रात्कतिचन पट्टसेनकांश्चित् xi, 42
प्रियया रथाङ्गमिव भृङ्गझङ्क्रिया ix, 38

फ

फेनश्रेणीतूलविक्षेपपूर्वा vii, 8

ब

बिम्बितस्सविधगैरिकरागः viii, 52
बिसदामनामनि बिलेशयाधिपे ix, 30

भ

भवति क्षणं व्यवहिते परीक्षितुम् ix, 25
भुजवल्लरीं द्विगुणितामुरोजयोः ix, 70
भूजानेः बलनिहितेन बर्हिषापुः xi, 11
भूतानि ध्रुवमितराणि भूतधात्र्याः xi, 32
भूयो व्यावर्त्यापि भूम्नाचनाम् vii, 14

म

मकरी सखी विलिखिता महीयसोः ix, 10
मङ्क्त्वा माया दंष्ट्रिणोदस्यमानाम् vii,13
मङ्क्त्वा सिन्धौ मार्गणाय श्रुतीनाम् vii,45
मज्जतो महति सन्तमसाख्ये viii, 44
मञ्जीरमन्या महिलाकरस्थम् xii, 6
मञ्जुलालिवलयारवमद्धा viii, 60
मदनस्तदौष्ण्यविनिवर्तिते धनुः ix, 36
मदवारिमन्मथमदावलेशितुः ix, 57
मदिरेक्षणामुखधृतं मुदे भवत् ix, 60
मधुधूर्णितस्य महतो भविष्यतः ix, 58
मधुपारणे विरचितं मृगीदृशा ix, 58
मन्दं मन्दं निक्कणत्किङ्किणीकाः vii, 4
मन्दाभूयो जन्मचिन्तां दुरन्ताम् vii, 38
मन्देहलोकमखिलं मथितुं पयोधेः x, 15
मन्मथेभमदभेषजमाशा viii, 25
मयि कोऽपराध इति माननात्मना ix, 21
मर्त्याधीशो माननापूर्वमेतान् vii, 24
मर्त्येन्दोरतिबलसिन्धुवाहिनीं स्वाम् xi, 27
मसृणो ममापि च समागमादरः ix, 43
महिलाजनस्य मदिरानिषेवणात् ix, 65
महीपतेरन्तिकमाससाद xii, 9
मान्यान्केचिन्मन्वते यत्त्वदन्यान् vii, 43
मारदिग्विजयमङ्गलकुम्भो viii, 54
मीनाकारा दृङ्निमज्येन्दिरायाः vii, 45
मीलदब्जनयनाऽजनि सैवा viii, 59
मुकुरे मुधाकृतसुधांशुमण्डले ix, 2
मुखमीक्ष्य ते मुकुलितस्मिताङ्कुरम् ix, 43
मुखरामणीयकमुधासुधाम्बुधौ ix, 11
मुच्यन्तेऽमी मौनिनो मातृगर्भा vii, 36
मूलं मुक्तेर्मोहतृष्णालवित्रम् vii, 41
मेदिन्याश्चेन्मेखलाद्भ्रमलीलाम् vii, 10
मैनाकाद्या यत्र भीनावलीनाम् vii, 6
मोक्षगारं प्राविशन्मोहदूरम् vii, 28

य

यदि शङ्कसे मयि कलङ्कमीक्ष्यताम् ix, 53
यदि सम्मुखं सवयसो नवेत्यसौ ix, 32
यन्त्राश्मप्रतिभयवर्षजेन्द्रगोपैः xi, 5
यन्त्राश्माहतिपतितानि यान्यभूवन् xi, 7
यस्मिञ्छौरेरेयुषो योगनिद्राम् vii, 4

यः सुप्तः किल हृदयेभियाति वाहिनि xi, 21
यानेन सञ्चरणमूरुयुगेन शुण्डाम् x, 39
युवनेत्रखञ्जनयुगेन खेलता ix, 7
युवमण्डलीधृतिगलग्रहोचितो ix, 12
युवयोर्न किं नु युगद्विमेलना ix, 55
युवयोस्स्मरेण युगपत्प्रयोजितम् ix, 54
युवयोः परस्परमुपेत्य मेलनम् ix, 47
युवलोकलोचनगतागतोचिता ix, 4
योधाः केचन युयुधुः नृपालमौलेः xi, 8
योधैर्नरस्समुपयाति युद्धतन्त्रम् xi, 40

र

रङ्गस्थानं राजसंसेवयाग्रे vii, 14
रच्यमानमिव राजरमण्या viii, 29
रञ्जितं नु सविधूदयरागम् viii, 46
रत्नगुच्छ इव रश्मिनिबद्धम् viii, 5
रमणापराधलहरीनियोजनम् ix, 46
रयादयासील्लिखितुं नृपेन्दुम् xii, 17
रागवेषजुषि रोषकृशानौ viii, 53
रागशालिरुचिपण्डमहोल्का viii, 50
राजीवाक्षस्यांशराज्योपलम्भात् vii, 26
रामचन्द्र इव पादनिवेशात् viii, 58
राम त्वत्केनेषुणा राक्षसेन्दोः vii, 54
रोहिणीरमणरागकृशानु viii, 64
रोहिणीशमनुचिन्त्यतमिस्त्रै viii, 39

ल

लक्ष्मीं रागाद्वैतरङ्गैरपाङ्गैः vii, 31
लघुसङ्कुचत्तनुलतैव लज्जया ix, 66
लास्योदग्रे रङ्गमेत्यान्तरङ्गे vii, 29

व

वतंसयन्ती वसुधावलारेः xii, 3
वदनाभीरूप्यवसुचौर्यवाञ्छया ix, 9
वदने तदा मनसि रागविभ्रमः xi, 64
वर्षन्तावभिमुखमेव वारिधारा xi, 33
वर्षन्नेकं वसन्ते वसु च समधिकं वाञ्छिता-
 य्याचकानाम् xii, 39
वल्लभे क्वचन जग्मुषि का वा viii, 62
वाचो रीत्या वैभवं तावकीनम् vii, 35
वातोऽपि ध्वजवसनोदितो मिलित्वा xi, 54
वामाक्ष्योबलपरिमाथिनो वरीतुम् xi, 31
वायोरभ्युदयपुषश्चिराय वह्निः xi, 16
वासराधिपवियोगगृहीतम् viii, 56
वासश्शय्याशीविषश्वासधूतम् vii, 31
वासो विच्युतिमवकल्प्यवाहनेतुः xi, 15
वाहिन्योरभिमुखमञ्जसा चलन्त्योः xi, 32
वाहेन्द्रास्सितधरवारवाणधारी xi, 55
विक्षिप्य वस्तु चलितेन विना सहायम् x, 24
विजित्य यान्त्या मरुतोऽपि वेगम् xii, 31
विज्ञातुं चपलतया रसान् विभिन्नान् xi, 44
विटमण्डलीविजयिनो मनोभुवो ix, 6
विदूरपातादिव नाक्षमन्त xii, 24
विद्योतयन्ति विविधागमशाखिकायाम् x, 8
विनतानना विधुमुखी त्रपावशात् ix, 35
विप्रयोगपरिरम्भविशेषम् viii, 8
विभोः परस्याश्च विलासवत्या xii, 24
विभ्रश्यद्धृतिवरणो विलुण्ठितात्मा xi, 14
विमुञ्च बाहू न पुरो विधेहि xii, 15
विरहानलेन विटमानसं यथा ix, 55
विलम्बसे किं विभुरागतोऽभूत् xii, 11

विलासहंसीविनियुक्तशेषम् xii, 10
विलोलहारावलिरोधहेतो xii, 20
विश्लथे दिनमणौ हरचूडा viii, 32
विश्वत्रय्या विष्वगाक्रान्तिहेतोः vii, 3
विश्वत्रय्यां व्यत्ययाद्धीरलक्ष्म्या vii, 20
विश्वंभरोरस्थलमिन्दिरायाः xii, 30
विषमायुधस्य विशतो मनोगृहम् ix, 10
विष्णुरूपमिव जातमहत्वम् viii, 23
विष्वक्तथानुवदतो जगतो विनोदात् x, 34
विस्तार्यमाणमरविन्दकरं नलिन्या x, 11
विस्तृतं किमु विहायसि चासीत् viii, 26
विस्मृत्य लाक्षाञ्जनगन्धसार xii, 17
विहाय डोलाविहृतिं प्रयाता xii, 8
विहितागसेव चरणावलम्बिना ix, 5
वीक्ष्य किञ्चिदभिलक्ष्यमुद्गताम् viii, 13
वीचिकां जगदिदं विधुभासाम् viii, 71
वीरोऽयं युधि हतशेषमश्वयूथम् xi, 49
वीरोऽयं हुतभुजि जिह्वतो द्विजिह्वान् xi,43
वेत्ता वेद्यो वीक्षको वीक्षणीयो vii, 44
वैय्यग्रान् नृपकरवालिका वलन्ती xi, 44
व्यग्रास्समीहित फलाय विधाय दृष्टिम् ix, 8
व्यग्रासिव्यतिहतवीरजातमूर्च्छा xi, 34
व्याचक्षाणं विश्रुतैर्नीतिमार्गैः vii, 19
व्यात्तास्यो वलयितकार्मुकोपदेशात् xi, 37
व्यानशे दशदिशोऽपि विचेतुम् viii, 12
व्यालीनान् दिशि दिशि वीक्षितुं विपक्षान्
xi, 13
व्यावर्तन्ते वीक्ष्य पाणौ रथाङ्गम् vii, 7
व्यात्रृण्वानाश्चक्रडोलाविहारम् vii, 5
व्यावृत्ताः किं माधव व्योमसिन्धु vii, 51
व्योमलङ्घनकृते विधुहंस viii, 65
व्योमसीमसुरभेर्विधुमण्डल् viii, 70


श


शक्तोत्येको नेति धर्तुं धरित्रीम् vii, 21
शयने कदाचन कदाचिदासने ix, 52
शयपल्लवस्सहचरस्य साहसात् ix, 77
शरदं समेयुषि शनैर्बलाहके ix, 39
शर्वरीरमणबिम्बमलासीत् viii, 45
शाखां प्रगृह्य पुरतः त्यजसि प्रतूर्णम् x, 42
शाबकानधिमनः कणिशालीम् viii, 10
शाम्यदर्यमशिलाशिखिधूम viii, 19
शार्दूलैरपि समशीर्षकान् धुनानाः xi, 28
शार्वरैर्जगृहिरे किल हस्त viii, 28
शिष्टैः कैश्चित्सेव्यमानं स विद्या vii, 24
शीर्णतारकुलशीकरजाले viii, 50
शीर्णासान्ध्यरुचिसूनविधान viii, 64
शौण्डीर्यावधिरवतीर्य साह्यवार्ताम् xi, 47
श्रान्ताश्चिराय दिवि च भ्रमितुं शकुन्ता x, 36
श्रीरङ्गपट्टण(पत्तन)मगाज्जयसिन्धुकन्या
x, 45
श्रुत्वा तामथ मैलुकप्रवृत्तिमुर्वीम् xi, 50
श्वसितस्य सौरभमभिप्रधाविनि ix, 36
श्वसितानलस्सुलभयाकिमीर्ष्यया ix, 30


स


सक्रोधं तदुभयसैन्यमण्डलानाम् xi, 4
सक्ष्वेलारभटी चमूभटो नगर्याः xi, 24
सरव्यमञ्चति ममेति किमस्याः viii, 31
सङ्कोचयत्यतिजडौ मरुतो कथञ्चित् x, 3

सङ्क्षोभश्शकधरणीशितुः तदास्यात् xi, 22
सङ्गोप्याखिलमपि चर्मणि स्वमङ्गम् xi, 30
सङ्ग्रामे नरसविभुस्सतातपाद xi, 51
सञ्चरत्सु दिवि पत्रिषु सन्ध्या viii, 48
सञ्चितं किमु पुटेष्ववटानाम् viii, 26
सतोरणालीं शनकैः प्रतोलीम् xii, 1
सत्पथालयसुधारसचर्चा viii, 68
सन्दष्टोदरपरिकल्प्यमानमौलिः xi, 20
सन्ध्यया नटितपल्लवशोभा viii, 35
सन्ध्यया सरसकुङ्कुमचर्चा viii, 47
सन्ध्याच्छलेन मुखमार्जनवस्त्रमाशा x, 14
सन्ध्यांशुदण्डमधिशक्रदिशं प्रचाल्य x, 11
स बभार वल्लभनखाङ्कचन्द्रम ix, 14
समुदीर्य सूक्तिभिरतीव दूतिका ix, 56
समुपालभे न हि भवन्तमीदृशम् ix, 31
समुपेहि तूर्णमिति सावलेपता ix, 18
सम्प्रेष्य हेतिसमवायमहर्मुखेन x, 16
सम्भवक्षणसमुत्थितमिन्दुम् viii, 67
सम्भ्रमेण चलचञ्चुचकोरैः viii, 70
सम्भ्राम्यतोपकरणग्रहणे समन्तात् x, 24
सम्मर्दतः पथि चमूश्शिथिलाः समन्तात् x, 29
सरसाशयेन्धनविशेषसंश्रयात् ix, 33
सरितः पयोदसमयावधौ यथा ix, 28
सलिलं घनालिचुलकीकृतोज्झितम् ix, 60
सविधं प्रियस्य गमिता सखीजनैः ix, 72
सहमृगनयनाभिस्तत्र सङ्क्रीडमानः ix, 79
संप्रेषितं वा सहवाससख्यात xii, 32
संप्रेष्यासौ शकपरिबृढः शासिता दुर्मदानाम् xi, 57
संबाधवद्व्रजहयाङ्घ्रिचयान्तरालम् x, 37
संबोधतो विशिथिलं जरती स्ववर्ग्यान् x, 34
संभावयन्त्यास्त्वरया परस्याः xii, 5
संरम्भतस्सरयमुत्पतिताश्वमूनाम x, 36
संरम्भात्सहबलतो बलैश्शकेन्दोः xi, 25
संवर्तार्णव सलिलेन वा परीतम् xi, 3
संविज्ज्योतिः छादयित्वान्तरान्ध्यं vii, 56
संहर्ता लघुसमरान्तको भटानाम् xi, 37
साक्षात्कारं शारदाया दयायाः vii, 23
साटोपं कतिचन खेटिकाश्शकारेः xi, 30
सान्द्रसन्तमससामजपङ्क्तेः viii, 30
सान्ध्यनृत्यपि निरङ्कुशचारम् viii, 24
सान्ववायमिव सैरिभवर्गे viii, 21
सायम्मिलद्दलशताक्रमणाद्द्विरेफः x, 3
सालक्तकायां पदवीथिकायाम् xii, 22
सावलम्बनमिवोत्पलजाले viii, 21
साशङ्कस्समजनि शाङ्करस्सखापि xi, 10
साहं पूर्विक नृपसैन्ययोधवीरैः xi, 14
सुदृशः कराग्रवलयेन चुक्रुशे ix, 77
सुदृशो विधूय बहुशो निवारणम् ix, 66
सुमुरवीमणेः सुलभकार्श्यसंपदः ix, 28
सेयं संवित् सैव विद्यानवद्या vii, 39
सोऽयं गतानुगतिकाखिललोकहास x, 33
सौधजालनिभयन्त्रणपट्टात् viii, 49
सौशील्यस्यालम्बनं सांपराया vii, 22
स्खलितं यदस्ति कमितु र्विदग्धया ix, 44
स्तावं स्तावं देवमेवंविधानाम vii, 58
स्थातुं न युक्तमसहायतयेति कुत्र x, 19
स्फुटबन्धभेदबहुभूमिकाविटैः ix, 78
स्फोटपङ्क्तिभिरिवाकुलकोक viii, 35

स्मराग्निदीप्तैः स्फुरतात्मनैव xii, 13
स्मरेषुपातेषु विवेदनेदम् xii, 36
स्यन्दमानमिव सन्तमसानाम् viii, 17
स्यन्दमानमिव सिन्धुरदाने viii, 20
स्रस्तां विहातुमपटुस्सरणौ च गोणीम् x, 32
स्वनिरोधिनीं किलपयोधरोन्नतिम् ix, 3
स्वाधीनोक्तिप्रेयसीशीर्षरत्नम् vii, 33
स्वैरं यतो विजयसे सुतनो करेणोः x, 39
स्वैरिणीयमवकुण्ठनवास viii, 31

ह

हरिपदनुतिचर्यानन्तरं मानवानाम् vii, 59
हरिणीदृशान्यतमया सविभ्रमम् ix, 1
हस्ते दधाना निजकेशहस्तम् xii, 27
हस्तेनाहतमुहुरंसलन्निजांसम् xi, 17
हस्तोदस्तस्वाङ्कलीना सुरारेः vii, 49
हारमौक्तिकचयैरिवकीर्णैः viii, 33
हारैस्तथोच्चैस्तनभूभृदर्हैः xii, 4
हुङ्कारैरुपजनयन्जनस्य भीतिम् xi, 18

NOTE—*The Roman figures stand for cantos and the Arabic numerals for the verses.*

## APPENDIX II

# INDEX TO PROPER NAMES AND PLACE NAMES


Ābhilāḥ, 39
Acyutendrakṣitīpa, 16
Acyuta nṛpaḥ, 41
Cera bhūpa, 3
Cerōrvīsa, 3
Hayapati, 33, 34
Kaverajā, 32
Keralesʹa, 2
Kṛṣṇā, the, 40
Pāṇḍyabhūpa, 4
Pāṇḍyōrvisʹa, 3
Pāṇḍya Sthāpanā-
cārya, 4
Pārasīka Kṣoṇisa, 37
Pārasīka Sainyam, 39
Raṅganātha (God Sʹrī), 5
Raṅga Sthānam, 2
Setu, 2
Sʹrīraṅgpaṭṭana, 33
Vijayanagaram, 41


NOTE—*The references are to pages in this Appendix.*